## सूचीपत्रम्

## प्राक्कथनम्

अर्घ्यम् इतिनामके अस्मिन् पुस्तके दश नाटकानि सन्ति। तेषु 'पापकृत् पापमश्नुते', 'शब्दजालम्' इति नाटकद्वयं लोकसंस्कृतपत्रिकायां प्रकाशितम्। अन्यानि अष्ट नाटकानि कुत्रापि न प्रकाशितानि। आश्रमविद्यालये प्रयुक्तानि एतानि सर्वाण्यपि ईषत् संशोध्य अत्र पुस्तकाकारेण प्रकाशयामः।

एतेषां नाटकानाम् इदमेव वैशिष्ट्यं यत् एतानि प्रयोगात् परमेव लिखितानि न तु पूर्वम्! प्रथमम् अध्यापकः नाटकस्य कथावस्तु अभिनेतृभ्यः विस्तरेण श्रावयति। ततः ते स्वस्वभागं स्वयं रचयन्तः अभिनयन्ति। तत्र अध्यापकः नूनं पर्याप्तं साहाय्यं करोति। इत्थम्, स्वल्पकालेन सम्यक् अभ्यस्ताः ते रङ्गमञ्चे स्वाभाविकतया सुनिपुणतया च दर्शकाणां मनांसि रञ्जयन्ति।

श्रीमातरं प्रति अर्घ्यरूपेण लिखितानि प्रयुक्तानि च एतानि संस्कृतभाषायां श्रद्धादरवर्धने सम्भाषणशिक्षणे च प्रभवेयुः इति नः शुभाशंसा।

—प्रकाशकः

# आत्मबलम्

पात्राणि – यतिः, कपिलः, सञ्जयः, विष्णुः (सञ्जयस्य पुत्रः) ।

## प्रथमं दृश्यम्

यतिः – (ध्यानस्थः) ॐ नमो भगवते (त्रिवारम्) ।

कपिलः – (निकटस्थमार्गे) जानासि सञ्जय ?

सञ्जयः – किं कपिल ?

कपिलः – अयं मुनिः महान्, सिद्धवाक् । स यत् वदति तदेव फलति !

सञ्जयः – किम् ? स यत् वदति तदेव फलति !

कपिलः – आम् । तव यदि कोऽपि दुर्गुणः स्यात्, तं कथय, निर्भयं कथय । स तव दुर्गुणं दूरयिष्यति । शतशः जनाः तेन उपकृताः भवन्ति ।

सञ्जयः – यदि एवम्, उपगच्छाव तम् । (द्वौ निकटं गत्वा)

कपिलः – प्रणमावः गुरुदेवम् ।

सञ्जयः – गुरुदेव, कृपादृष्टिं करोतु ।

यतिः – किमिच्छथः वत्सौ ? निःशङ्कं श्रावयतं सर्वम् ।

सञ्जयः – गुरुदेव, अहं भृशं क्रोधी ।

यतिः – वत्स, क्रोधस्ते अपगमिष्यति ।

कपिलः—अहं गुडविक्रेता, अल्पं धनं प्राप्नोमि। तत् कुटुम्ब-पोषणाय न पर्याप्तम्। अतः चौर्यं करोमि।

यतिः—वत्स, त्वं चौर्यं त्यक्ष्यसि।

द्वौ—धन्यवादाः गुरुदेव!

यतिः—मह्यं कुतः धन्यवादान् अर्पयथः? भगवते निवेदयतम्। अहं तु तस्य दासमात्रम्।

कपिलः—सत्यम्, महान् भवान्। (द्वौ प्रणमतः)

## द्वितीयं दृश्यम्

(सप्ताहः व्यतीतः। यतिः रामायणं पठति।)

कपिलः—(विष्णुसञ्जयाभ्यां सह) प्रणमाम गुरुदेवम्। (सर्वे प्रणमन्ति।)

यतिः—पुनः आगता यूयम्! का वार्ता अधुना? अपि सर्वं कुशलम्?

सञ्जयः—आम्, सर्वं कुशलं गुरुदेव! भवतः आशीर्भिः क्रोधः गतः।

यतिः—सर्वं भगवत्कृपायाः फलम्। यदि स इच्छेत् किम् अलभ्यम् अशक्यं वा त्रिभुवने? वत्स, किं त्वम् अधुनापि चोरयसि?

कपिलः—न गुरुदेव! भवतः कथनात् चोरबुद्धिः मम गता। भवान् सत्यं महापुरुषः, सकृत्कथनेन चिरन्तनीं चौर्यासक्तिम् अनाशयत्। कः भवान् गुरुदेव?

यतिः—नाहं कोऽपि असाधारणपुरुषः, तस्य भगवतः यन्त्रमात्रम्। अन्तरे स्थितः स सर्वान् चालयति। सर्वः तस्यैव महिमा। कोऽयं बालकः ? किमिच्छति ?

सञ्जयः—अयं मम पुत्रः। अत्यधिकं गुडं खादति। निवारयतु अस्य कुवृत्तिं कृपया।

यतिः—गुडं खादति ? क्षम्यताम्, अधुना प्रतिकारः दुःसाध्यः। किं वत्स, त्वं गुडं बहु खादसि ? अस्तु, पक्षान्ते त्यक्ष्यसि।

सर्वे—अनुगृहीता वयम्।

यतिः—ईश्वरं प्रति कृतज्ञा भवत। (सर्वे प्रणमन्ति।)

## तृतीयं दृश्यम्

कपिलः—गुडः, गुडः, स्वादुगुडः ! शुद्धगुडं कः ग्रहीष्यति ? गुडः, गुडः ... गुरुदेव, गुरुदेव ! गुडं न ग्रहीष्यति ? साधुगुडः, मया एव निर्मितः।

यतिः—गुडः ? आम् देहि, गुडः आवश्यकः, किन्तु ... नहि वत्स, गुडं न इच्छामि। अन्यत्र विक्रयं कुरु।

कपिलः—किं धनविषये चिन्तयति भवान् ? अहं धनं न इच्छामि। भवतः सकाशात् धनं ग्रहीतुं न शक्नोमि। भवान् मां चौरकार्यात् अमोचयत्। स्वीकरोतु गुडोपहारम्।

यतिः — वत्स, सर्वदा यूयं मनुष्यं कर्तारं मत्वा तस्य प्रशंसां कुरुथ। भगवान् एव अनन्यकर्ता । तस्मै कदापि कृतज्ञतां न निवेदयथ ।

कपिलः — गुरुदेव, अहं भवते गुडम् अवश्यं दातुम् इच्छामि ।

यतिः — अस्तु, देहि । (गुडकलसं स्थापयित्वा कपिलः गच्छति ।) अरे किं संपूर्णं कलसं स्थापयित्वा गच्छसि ? नय एतत् । कथम् ! गतः सः ! ... गुडं खादितुम् इच्छा भवति । किन्तु ... नहि, आत्मसंयमः कार्यः । न खादिष्यामि गुडम् अद्यप्रभृति ।

## अन्तिमं दृश्यम्

(सप्ताहद्वयं व्यतीतम् । गुरुः जपरतः । प्रविशतः पितापुत्रौ ।)

द्वौ — प्रणमाव गुरुदेवम् । (प्रणमतः)

सञ्जयः — भवता कथितं पक्षान्ते पुत्रम् आनय इति ।

यतिः — वत्स, किं ते नाम ?

विष्णुः — विष्णुः ।

यतिः — गुडम् अत्यधिकं रोचयसे ?

विष्णुः — आम्, सर्वदा गुडभक्षणं रोचये ।

यतिः — अधुनैव गुडभोजनं त्यक्तव्यम् !

विष्णुः — सत्यं गुरुदेव ! अधुना गुडं खादितुम् ईषदपि इच्छा न

भवति । एतान् खण्डान् भवतः पादप्रान्ते स्थापयामि ।
(गोहात् निष्कास्य स्थापयति)

सञ्जयः—गुरुदेव ! मम मनसि कश्चित् प्रश्नः विद्यते ।

यतिः—निःसङ्कोचं प्रकाशय ।

सञ्जयः—भवान् पूर्वं कुतः नावदत् 'गुडभोजनं त्यक्तव्यम्' इति ? कुतः आवां पक्षान्ते आहूतौ ? कुतः न पूर्वम् ?

यतिः—साधुप्रश्नः । तदानीम् अहं स्वयं गुडे अतीवासक्तः आसम् । तर्हि केन बलेन तं कथयेयं मा खाद इति । पक्षेण एकेन मया गुडभोजनं त्यक्तम् । अधुनाहं तम् आत्मबलेन कथयितुं शक्नोमि त्यज इति । आत्मबलं विना अन्यया कयापि शक्त्या एतत् न सम्भवम् । यत् स्वयं करोषि तस्मात् अन्यं निवारयितुं न अर्हसि । अतोऽहं तदा न उक्त्वा अधुना अवदम् ।

सञ्जयः—भवता अस्माकं नेत्रे उन्मीलिते ।

(गोहः—pocket.)

# रामायणमाहात्म्यम्

पात्राणि – राजा, सभापण्डितः, घोषकः, रक्षिकः, चत्वारः ब्राह्मणाः ।

## प्रथमं दृश्यम्

रक्षिकः – श्रूयताम्, श्रूयताम् ।

घोषकः – महाराजः घोषयति – वर्षस्य एकादशमासे, एकादश-दिनाङ्के राजा दरिद्रेभ्यः, ब्राह्मणेभ्यः पण्डितेभ्यश्च दानं दास्यति ... सर्वे शुभ्रवस्त्रं धारयित्वा आगच्छन्तु ...

(चत्वारः ब्राह्मणाः प्रविशन्ति ।)

प्रथमब्रा. – श्रुतं मया राजा ब्राह्मणेभ्यः दानं ददाति इति ।

द्वितीयः – आम्, मयापि श्रुतम् । अस्माभिः अवश्यं गन्तव्यम् । वयं तु निर्धनाः !

तृतीयः – सम्यक् कथितम् । धनं तु नास्ति, मस्तके बुद्धिरपि नास्ति । अहम् एतत् जानामि, त्वमपि जानासि ...

प्रथमः – अहं तु न जानामि ।

तृतीयः – किन्तु सर्वे जानन्ति !

चतुर्थः – अस्तु, अरे रिक्तहस्ताः कथं गमिष्यामः ?

द्वितीयः – चिन्तनीयम् ।

तृतीयः—वयं रामायणं पठिष्यामः ।

चतुर्थः—आम्, रामायणं पठिष्यामः ।

द्वितीयः—अपि जानासि—रामायणं कः अलिखत् ?

तृतीयः—मन्ये त्वमेव न जानासि । कः न जानाति एतत्—महाकविः कालिदासः अलिखत् !

द्वितीयः—मूढ ! कालिदासः कथम् ? विश्वामित्रः अलिखत् । कालिदासः तु महाभारतम् अलिखत् !

चतुर्थः—सम्यक् कथितम् ।

प्रथमः—नहि, नहि । रावणः सीतां हृत्वा लङ्कायां रामायणम् अलिखत् ।

चतुर्थः—प्रमादं करोषि । न जानासि इमं श्लोकम् ?

कुम्भकर्णे भकारोऽस्ति भकारोऽस्ति विभीषणे ।
तयोर्ज्येष्ठोऽसुरश्रेष्ठो राभणो न तु रावणः ॥

रामायणं राभणः अलिखत्, न तु रावणः । बोधसि ? राभणः !

द्वितीयः—अहो बुद्धिमान् भवान् ! श्लोकमपि जानाति !

तृतीयः—किन्तु अस्माकं सकाशे तु पुस्तकानि न सन्ति !

प्रथमः—पुस्तकविषये मा चिन्तयत । मम पितामहः रामायणं पठति स्म । अहं पुस्तकानि आनेष्यामि । आगच्छत, आगच्छत ।

## द्वितीयं दृश्यम्

(राजा दानं करोति । सर्वे राजानं प्रणम्य गच्छन्ति । अथ दानसमाप्तेः परम्)

रक्षिकः—द्वारदेशे चत्वारः ब्राह्मणा भवतः दर्शनार्थं प्रतीक्षन्ते ।

राजा—सादरं प्रवेशय । (चत्वारः ब्राह्मणाः प्रविशन्ति ।) किम् इच्छथ यूयम् ?

प्रथमः—निर्धना ब्राह्मणा वयम् । भवतः दर्शनार्थम् आगताः । गच्छामः अधुना ।

राजा—तिष्ठत । कस्यां विद्यायां निपुणाः यूयम् ?

तृतीयः—रामायणपठने ।

राजा—अस्तु, श्वः युष्माकं पाठं श्रोष्यामि । रक्षिक, एतान् अतिथिशालामार्गं दर्शय ।

रक्षिकः—इत इतः भवन्तः । (ब्राह्मणाः गच्छन्तः)

तृतीयः—खेलः समाप्तः ।

प्रथमः—दानं न प्राप्तम् ।

द्वितीयः—श्वः मन्ये भोजनमपि न प्राप्स्यामः ।

## अन्तिमं दृश्यम्

चतुर्थः—पुस्तकानि सन्ति । वयमपि स्मः । किन्तु कथं पठनीयम् ?

प्रथमः – मम पितामहः एवं पठति स्म । शृणुत । श्रावयामि ।

न ना ना ना न ना ना न ना न ना न न ना न न ।

गायत । 'ना' अस्ति दीर्घस्वरः 'न' च ह्रस्वः ।

द्वितीयः – अस्य प्रत्येककथायां 'पितामहः', 'पितामहः' !

प्रथमः – गीयताम्, गीयतां शीघ्रम् ।

सर्वे – न ना ना ना न ना ना न (मध्ये तृतीयः विचित्रं गायति ।)

तृतीयः – मम न भवति ।

प्रथमः – तत् तु सर्वे बोधन्ति ।

द्वितीयः – तथापि चिन्तां मा कुरु । पुस्तकम् उद्घाट्य मुखे यत् आयाति तत् वद ।

प्रथमः – किन्तु सर्वैः समस्वरेण पठनीयम् ।

चतुर्थः – अस्तु, अहम् आरभे । प्राप्नुयाश्चेत् पुरस्कारं वद त्वं किं करिष्यसि ?

प्रथमः – साधु गीतम्, सर्वे एवमेव गायन्तु । (गानेन ते परस्परं वदन्ति)

तृतीयः – न जानामि न जानामि, आम् जानामि जानामि ।

प्रासादं रचयिष्यामि सत्वरम् अतिशोभनम् ।

प्रथमः – राजप्रियः सभाश्रेष्ठो भविष्यामि सुपण्डितः ।

द्वितीयः – अहम्, अहं राजकुमार्यास्तु वाञ्छामि भवितुं पतिः ।

चतुर्थः – लड्डुकानां शतं नित्यं भोजनं मे भविष्यति ।

किञ्चिदपि न दास्यामि तुभ्यं तस्मात् न याच माम् ॥

2

नेपथ्यात्—महाराजः प्रविशति ... (राजा सभापण्डितेन सह प्रविशति ।)

प्रथमः—महाराजेन पृष्टोऽहं किं वदेयं प्रशिक्षय ।

द्वितीयः—त्वत्समा हि दशा मेऽद्य समदुःखौ प्रपीडितौ ।

तृतीयः—एवमार्यं कियत्कालम् ? जायते मे भृशं भयम् ।

चतुर्थः—मा भैषीस्त्वं महाभीरो यावान् गच्छति गच्छतु ।

राजा—यूयं किं पठथ ?

सर्वे—(भयेन) रामायणम् !

राजा—रामायणम् ? मया पूर्वं रामायणं बहुवारं पठितम् । परन्तु ईदृक् उत्तमा भाषा, उदात्तभावश्च कुत्रापि न लक्षितः ।

सभापण्डितः—एते सत्यमेव मूर्खाः । यदि एतेषां साहाय्यं कर्तुं न शक्नोमि तर्हि कथं सभापण्डितः अहम् ! (प्रकाशम्) महाराज, एते सर्वे रामायणमेव पठन्ति । प्रथमपण्डितः अयोध्याकाण्डं पठति, "महाराजेन पृष्टोऽहं किं वदेयं प्रशिक्षय ।" अस्य अर्थः—यदि महाराजः मां पृच्छेत्, अहं तस्मै किम् उत्तरं दद्याम् इति मां शिक्षय । श्रीरामः वनं गतः । तं प्रत्यानेतुं सुमन्त्रः गतः दशरथस्य आदेशेन । रामः गृहं प्रत्यागन्तुं न इच्छति । तदा सुमन्त्रः श्रीरामं पृच्छति श्लोकमुखेन—"महाराजेन पृष्टोऽहं किं वदेयं प्रशिक्षय" ।

राजा—अहो एवम् ! तदा द्वितीयपण्डितः किं पठति ?

सभापण्डितः—अयं किष्किन्धाकाण्डं पठति, "त्वत्समा हि दशा मेऽद्य समदुःखौ प्रपीडितौ ।" श्रीरामः सुग्रीवं कथयति —तव या दशा, ममापि सा, तव यद् दुःखम्, ममापि तदेव । द्वयोः पत्नी हृता । द्वयोः राज्यं नास्ति । अतः द्वयोः दशा समाना । "त्वत्समा हि दशा मेऽद्य समदुःखौ प्रपीडितौ ।" किं भो ब्राह्मण, त्वम् एतदेव पठसि, किष्किन्धाकाण्डमेव पठसि, नैवम् ?

द्वितीयः—आम्, अहं तदेव पठामि । (तृतीयब्राह्मणं प्रति) किष्किन्धा इति किम् ?

तृतीयः—न जाने । तूष्णीं तिष्ठ ।

सभापण्डितः—(तृतीयं प्रति) त्वं किं पठसि ?

तृतीयः—अहं रामायणं पठामि ।

सभापण्डितः—तत्तु अहं जानामि, किन्तु किं काण्डम् ?

तृतीयः—किं काण्डम् ... तत् ... तत् ... काण्डम् !

सभापण्डितः—युद्धकाण्डं न वा ?

तृतीयः—आम् आम्, तदेव । तदेव पठामि ।

सभापण्डितः—किं पठसि ? काण्डं न जानासि ? महाराज, मन्ये तृतीयचतुर्थपण्डितौ युद्धकाण्डमेव पठतः । रावणः यदा बहुकालं सीतां लङ्कायाम् अरक्षत् तदा रावणपत्नी

मन्दोदरी रावणम् अपृच्छत्, "एवमार्य कियत्कालम् ? जायते मे भृशं भयम् ।" अत्र मन्दोदरी वक्तुम् इच्छति –कार्याणां गतिं दृष्ट्वा मम भयं भवति । इत्थं कियत्कालं प्रचलिष्यति ? रावणः उत्तरति–त्वं महाभीरुः । भयं मा कुरु । यावत्कालं प्रचलति प्रचलेत् । "मा भैषीस्त्वं महाभीरो यावान् गच्छति गच्छतु ।" महाराज, इमे रामायणमेव पठन्ति । अपि मया सम्यक् न कथितम् ?

सर्वे–आम्, वयं सर्वे तदेव पठामः ।

राजा–मया चिन्तितं सर्वे मामेव उद्दिश्य वदन्ति इति ।

सभापण्डितः–महाराज, रामायणस्य वचनानि जीवनेऽपि चरितार्थानि भवन्ति ।

राजा–तदा एतेभ्यः पारितोषिकं दातव्यम् । एत यूयम् ।

सभापण्डितः–शीघ्रं गच्छत । अद्य प्रचुरं पुरस्कारं प्राप्स्यथ । (सर्वे निष्क्रान्ताः) आश्चर्यमिदम् !

रामायणस्य माहात्म्यं त्रायते सकलान् जनान् ।
मूर्खो वा पण्डितो वा स्याल्लभते स स्ववाञ्छितम् ॥

# अहमपि कविः

पात्राणि – ब्राह्मणः, ब्राह्मणी, राजा, मन्त्री, नापितः,
प्रथमरक्षिकः, द्वितीयरक्षिकः ।

## प्रथमं दृश्यम्

ब्राह्मणः – (कटे शयानः) सूर्यः उदितः । तेन किम् ? ह्यः रात्रौ बहुविलम्बेन अस्वपम् । सायं सप्तवादनस्थाने रात्रौ नववादने अस्वपम् । अधुना दिनस्य अष्टवादनम् । एकादशभिः होराभिः किं निद्रापूर्तिः भवति ? स्वाप एव जीवनम् । जीवनं स्वापः । स्वपिमि खादामि, खादामि स्वपिमि । अरे शृणोषि ! सूर्यकिरणाः मुखे पतन्ति । वातायनं संवर ।

ब्राह्मणी – (प्रविश्य) किम् अधुनापि स्वपिषि ? उत्तिष्ठ ।

ब्राह्मणः – किञ्चित् स्वपिमि, तत्रापि एषा बाधां जनयति ।

ब्राह्मणी – वहिर् गत्वा कार्यं कुरु । अहं गृहं सम्मार्जयिष्यामि । उत्तिष्ठसि न वा ? अन्यथा मुखे कच्चरं पातयामि ।

ब्राह्मणः – एषा पत्नी वा राक्षसी वा ?

ब्राह्मणी – त्वं कः ? त्वं तु महामूर्खः । किमपि कार्यं न करोषि ।

ब्राह्मणः – अहं किं गृहकार्यं कुर्याम् ?

ब्राह्मणी – गृहकार्यं नहि, बहिर् गत्वा कार्यं कुरु।

ब्राह्मणः – ब्राह्मणाः तु कदापि कार्यं न कुर्वन्ति। पठनमेव तेषां जीवनम्।

ब्राह्मणी – त्वं तु कदापि न पठसि।

ब्राह्मणः – कः वदति, 'अहं न पठामि'? अवश्यं पठामि। स्वप्ने पठामि।

ब्राह्मणी – आम् आम्, त्वं स्वप्ने पठसि। अहं च सर्वं कार्यं करोमि।

ब्राह्मणः – एतादृशेन वृथाकार्येण किं भविष्यति? मम सम्पूर्णं शरीरं व्यथते। मम पादौ किञ्चित् संवाहय। तेन तव पुण्यं भविष्यति।

ब्राह्मणी – आम् आम्, आयामि, सम्मार्जन्या सह आयामि (ब्राह्मणः धावन् निष्क्रान्तः) यदि सायङ्काले रूप्यकाणि न आनयसि, मम उग्ररूपं द्रक्ष्यसि।

### द्वितीयं दृश्यम्

ब्राह्मणः – (गच्छन्) किं कुर्याम्? अनेन स्थूलोदरेण किमपि कार्यं न भवति। सूर्यस्य प्रखरः तापः मस्तकं स्फोटयति इव। अस्य वृक्षस्य छायायां किञ्चिद् विश्राम्यामि। किं कुर्याम्? कुत्र गच्छेयम्? अस्मिन् आतपे किं शारीरिकं कार्यं सम्भवति? अपि च मादृशाः स्थूलाः

ब्राह्मणाः कुत्रापि कार्यं कुर्वन्ति इति मया जीवने कदापि न श्रुतम् । ब्राह्मणाः पठन्ति, मन्त्रान् जपन्ति । मूर्खोऽहम् । किमपि न जाने । किञ्च यस्मात् कालात् सः दिवाकरगोस्वामी ग्रामम् आगतः, कोऽपि मां नैव निमन्त्रयति न च भोजनं ददाति । ... श्रुतं मया यत् राजा ब्राह्मणेभ्यः आश्रयं ददाति । मया राज्ञः सकाशं गन्तव्यम् । किन्तु रिक्तहस्तेन कथं गच्छेयम् ? आम्, अहं काव्यं लेखिष्यामि । (हसन्) काव्यम् लेखिष्यामि । हे मातः सरस्वति ! विद्यां देहि मातः ! सरस्वति नमस्तुभ्यम् । अग्रे तु जङ्गलम् । यदि कोऽपि व्याघ्रः मां खादेत् ! भवतु, पत्न्या ताडनात् व्याघ्रेण भक्षणम् एव वरम् । गच्छामि । जङ्गल ! अहम् आयामि । जङ्गलम् आगतम् । शब्दं शृणोमि । भयं भवति । कः तत्र ? कः शब्दं करोति ? किम् ? अहो हरिणः । मम भयं नास्ति । अपेहि, अपेहि । शृङ्गेण वृक्षे खुर्खुरायते हरिणः । एतदेव लिखामि–खुर्खुरायमाणः हरिणः । कियत् सुन्दरम् ! राजा अवश्यं प्रसन्नः भविष्यति । किन्तु एषा केवलम् एका पङ्क्तिः । कोऽयं जीवः निश्चलः तिष्ठति ? अहो कच्छपः ! निश्चलः तिष्ठति कच्छपः । खुर्खुरायमाणः हरिणः, निश्चलः तिष्ठति कच्छपः । अहं तावत् कविः इति मया नैव ज्ञातम् । ... सुन्दरोऽयं पक्षी । मन्दं मन्दं गच्छति । दधिवत् वर्णः । मन्ये

बकोऽयम् । मन्दं मन्दं बकः गच्छति । न, न भवति । खुर्खुरायमाणः हरिणः, निश्चलः तिष्ठति कच्छपः, मन्दं मन्दं बकेन गम्यते । आम्, अधुना राजा मह्यं प्रचुरं पुरस्कारं दास्यति । अहं धनिकः भविष्यामि । अदूरात् शब्दं शृणोमि । कः आयाति ? मम भयं भवति । (शूकरः धावन् गच्छति) अहो शूकर ! ददडदडदडद् धावसि कुत्र ? कविता तु जाता । अधुना राज्ञः सकाशं गच्छामि । मन्ये स निजपुत्रीम् अपि पाणिग्रहणार्थं दास्यति मह्यम् । तदा पत्नि मम, शृणु, सम्पूर्णसमये कार्यम् अकृत्वा एव स्वप्स्यामि । राजकुमारी मम पादौ संवाहयिष्यति । अस्तु, गच्छामि अधुना शीघ्रं नृपगृहं श्रावयितुं स्वकाव्यम् ।

## तृतीयं दृश्यम्

प्रथमरक्षिकः – कस्त्वम् ?

ब्राह्मणः – अहं कविः, नृपसकाशं गच्छामि ।

रक्षिकः – किं त्वं कवितां लिखसि ?

ब्राह्मणः – आम्, अहं कवितां लिखामि ।

रक्षिकः – अस्तु, प्रविश । (प्रविश्य किञ्चिद् दूरं गत्वा)

द्वितीयरक्षिकः – कस्त्वम् ?

ब्राह्मणः – अहं कविः ।

रक्षिकः – त्वं कपिः ।

ब्राह्मणः – कपिः ? नहि, कविः, कविः । कपिः कीदृशः भवति ?

रक्षिकः – महाकविस्त्वं कपिशब्दमपि न जानासि ? कां कवितां लिखसि ?

ब्राह्मणः – श्रोष्यति भवान् ? शृणोतु । खुर्खुरायमाणः हरिणः । निश्चलः तिष्ठति कच्छपः । मन्दं मन्दं वकेन गम्यते ।

रक्षिकः – भवानपि इतः मन्दं मन्दं गच्छतु । (बहिर्गमनाय सङ्केतयति)

ब्राह्मणः – ददडदडदडद् धावसि कुत्र ?

रक्षिकः – किम् एतां कवितां राज्ञे श्रावयिष्यसि ? गच्छ, गच्छ । नृपस्य समयः नास्ति ।

ब्राह्मणः – किन्तु प्रथमरक्षिकः अवदत् अन्तरे प्रविश इति ।

रक्षिकः – अस्तु । अत्रैव तिष्ठ । अहम् अन्तरे पृष्ट्वा आयामि । (निष्क्रान्तः)

ब्राह्मणः – न जाने, राजा किं कथयिष्यति । अत्र भित्तौ लिखामि । यदि राजा कदाचित् पश्येत्, मन्ये पुरस्कारं दद्यात् ।

रक्षिकः – (लेखने समाप्ते) अरे किं करोषि ? सर्वं मलिनयसि । तत्र किं लिखसि ?

ब्राह्मणः – किमपि नहि । किमपि नहि । राजा किम् अवदत् ?

रक्षिकः—अद्य नहि, श्वः आगच्छ ।

ब्राह्मणः—अस्तु ।

## अन्तिमं दृश्यम्

राजा—(क्षौरगृहं प्रविशन्) असाधुरूपेण किं लिखितमस्ति तत्र ? नापित ! किं करोषि ? शीघ्रम् आगच्छ ।

नापितः—आयामि महाराज, आयामि । (सहसा अन्यमनस्कः भवति ।)

राजा—अद्य साधुरूपेण क्षौरं कुरु । नापित ! किं चिन्तयसि त्वम् ?

नापितः—(कण्ठे वस्त्रं दत्त्वा अतिदृढं बध्नाति) साधुरूपेण करोमि राजन् !

राजा—(रुद्धश्वासः) किं करोषि ? वस्त्रं शिथिलय । किं मां मारयितुम् इच्छसि ?

नापितः—आम् महाराज ! नहि, नहि महाराज !

राजा—आम् ? किं वदसि त्वम् ?

नापितः—नहि महाराज ! प्रमादेन मुखात् स्खलितम् । (स्वगतम्) अपि महाराजः जानाति अहं तं मारयिष्यामि इति ?

राजा—नापित ! किं जातं तव अद्य ?

नापितः—न किमपि महाराज ! (नापितः क्षुरं तेजयति । तत्क्षणे राजा भित्तौ पठति ।)

राजा – खुर्खुरायमाणः हरिणः (नापितः क्षुरं त्यक्त्वा विरमति), निश्चलः तिष्ठति कच्छपः (स आश्चर्येण मन्दं मन्दं गच्छति), मन्दं मन्दं बकेन गम्यते (स भयेन धावति), ददडदडदडद् धावसि कुत्र ? नापित ! कुत्र गच्छसि ? शीघ्रम् आगच्छ ।

नापितः – (भयेन कम्पमानः) क्षम्यतां महाराज ! क्षम्यताम् । अत्र मम दोषः नास्ति ।

राजा – तव दोषः नास्ति चेत्, कस्य दोषः ? त्वमेव तु पलायसे ।

नापितः – न महाराज ! महामन्त्री अवदत् माम् ...

राजा – महामन्त्रिणः अत्र कः सम्बन्धः ? किं स त्वां कार्यं त्यक्त्वा पलायनाय अवदत् ?

नापितः – नहि महाराज ! सः अवदत् – यदा त्वं क्षौरं करोषि तदा ...

राजा – तदा किम् ? शीघ्रं वद ।

नापितः – महामन्त्री अवदत्, अवदत्, कथं वदेयम्, यदा त्वं क्षौरं करोषि तदा महाराजं मारय इति ।

राजा – महाराजं मारय इति ! पुनर्वद ।

नापितः – आम् महाराज ! स एतदेव अवदत् ।

राजा – तस्य एतावती आस्पर्धा ! मम विश्वासः न भवति । कोऽत्र भोः ! (रक्षिकौ प्रविशतः)

प्रथमरक्षिकः—आज्ञापयतु देवः ।

राजा—महामन्त्रिणम् आह्वय ।

रक्षिकः—तथा । (निष्क्रान्तः)

राजा—(द्वितीयरक्षिकं प्रति) कः अलिखत् एतत् ?

रक्षिकः—ह्यः कोऽपि मूर्खः ब्राह्मणः अलिखत् ।

राजा—आह्वय तं शीघ्रम् ।

रक्षिकः—यथाज्ञापयति देवः । (मन्त्रिसहितः प्रथमरक्षिकः प्रविष्टः, द्वितीयः निष्क्रान्तः ।)

राजा—महामन्त्रिन् ! किं शृणोमि अहम् ?

मन्त्री—किं शृणोति भवान् ?

राजा—त्वं मां मारयितुम् इच्छसि !

मन्त्री—अहं महाराज ? भवतः दासोऽहम् । भवान् मे प्रभुः । कथम् अहं भवन्तं मारयितुं चिन्तयेयम् ! असत्यमिदम् ।

राजा—नापित ! अत्र आगच्छ । अपि स त्वां नावदत् मां मारय इति ?

नापितः—आम् महाराज ! स एवमेव अवदत् ।

मन्त्री—मिथ्या, मिथ्या, स मिथ्या वदति महाराज !

राजा—महामन्त्रिन् ! स सत्यमेव वदति । रक्षिक ! द्वौ अपि कारागारं नय ।

नापितः—महाराज, महाराज ! ममात्र प्रमादः नास्ति । क्षम्यताम्, पुनः न करिष्यामि कदापि ।

मन्त्री—अहं भवतः साधुमन्त्री महाराज !

राजा—विचारात् परं द्रक्ष्यामः । अधुना युवां द्रष्टुं न इच्छामि । (मन्त्रिणा नापितेन च सह रक्षिकः निष्क्रान्तः । द्वितीय-रक्षिकेण सह ब्राह्मणः प्रविशन्)

ब्राह्मणः—गृहे पत्नी ताडयति, अधुना राजा दण्डयिष्यति ।

रक्षिकः—अयं स महाराज ! (तं नुदति । सः राज्ञः पादयोः पतति ।)

ब्राह्मणः—क्षम्यतां महाराज ! पुनः न करिष्यामि ।

राजा—उत्तिष्ठ । किं मन्यसे ? राजभित्तिं मलिनयसि । प्राणदण्डं प्राप्स्यसि ।

ब्राह्मणः—महाप्रमादः जातः महाराज !

राजा—नेत्रे उन्मीलय । (तस्य हस्तयोः धनप्रसेवं स्थापयति ।)

ब्राह्मणः—(नेत्रे उन्मील्य) किम् ? धनम् ! महाराजाय रुचिता मे कविता ।

राजा—तव काव्यलेखनात् अद्य मम जीवनं रक्षितम् । वयं प्रसन्नाः स्मः । यदा कदापि धनम् इच्छसि, अस्माकं सकाशम् आगच्छ ।

# सत्सङ्गः

पात्राणि – विष्णुः, नारदः, कीटस्वर्णपादः, गोवत्सः शुभ्राङ्गः, ज्योतिष्मान् (राजपुत्रः), राजा, मन्त्री, प्रतीहारः ।

## प्रथमं दृश्यम्

(भगवान् विष्णुः सिंहासने आसीनः । नारदः चिन्तामग्नः प्रविशति ।)

विष्णुः – वत्स, कुतः चिन्ताकुलो दृश्यसे ?

नारदः – एवमेव भगवन् ! कश्चित् प्रश्नः मम हृदयं व्याकुलयति । अपि अस्ति सत्सङ्गस्य कोऽपि प्रभावः ?

विष्णुः – अस्ति वत्स ! किन्तु कुतो व्याकुलस्त्वम् ?

नारदः – भगवन् ! भ्रमन् पृथिव्याम् अपश्यं किमपि विचित्रम् ! ऋषिवचनानि उपेक्ष्य असद्वचनैः प्रभाविताः जनाः । यदि एवं तर्हि सत्सङ्गस्य किं मूल्यम् ?

विष्णुः – वत्स नारद ! महीतले कपिलेन्द्रपुरे बिन्दुसागरनामके जलाशये स्वर्णपादो नाम कश्चित् कीटः वसति । तत्र गम्यताम्, स तव प्रश्नस्य उत्तरं दातुम् अर्हति ।

नारदः – विचित्रा ते सृष्टिः प्रभो !

## द्वितीयं दृश्यम्

नारदः—एतदेव कपिलेन्द्रपुरम् । अत्रैव भवेत् स जलाशयः । केन मार्गेण गन्तव्यम् अधुना ? दक्षिणदिशाम् अनुसरामि । अहो रमणीयं दृश्यम् ! हरिताः वृक्षाः विविधपुष्पैः सुशोभन्ते । घासपुष्पाणि आनन्देन विहसन्ति । पक्षिणः मनोहरं कूजन्ति । सम्पूर्णा सृष्टिः सोल्लासं भगवन्तं स्मरति, तम् आवाहयति इव । (शिलायाम् उपविश्य) अपि सम्पूर्णजगति नास्ति कोऽपि सज्जनः यो मां सत्सङ्गस्य मूल्यं बोधयेत् ! भगवान् मां क्षुद्रकीटसकाशं प्रैषयत् । विचित्रा ते लीला प्रभो, अज्ञेयं ते विधानम् । अयमेव स बिन्दुसागरो नाम जलाशयः । अत्रैव निवसति स्वर्णपादः । आह्वयामि तावत् । स्वर्णपाद ! स्वर्णपाद !

स्वर्णपादः—को नु माम् आह्वयति ? अहो सौभाग्यं मे ! देवर्षिनारदः सम्प्राप्तः अद्य द्वारदेशे । प्रणमामि महर्षे, कृतकृत्योऽस्मि भवद्दर्शनेन । सार्थकं मे जीवनम् ।

नारदः—शमस्तु ते । (कीटो म्रियते ।) भोः किं जातम् ? अयं मृतः ! किमिदम् ? हा कष्टम्, किमेतत् ? उत्तरम् अदत्त्वा एव मृतः ! (शिलायाम् उपविशति ।)

विष्णुः—(तस्य पृष्ठतः स्थित्वा) वत्स ! कुतो विषण्णस्त्वम् ? उत्तिष्ठ वत्स, अलं शोकेन । जातस्य हि ध्रुवो मृत्युः ।

शोकं मुक्त्वा गोविन्दस्य गोशालां गच्छ । तत्र सद्योजातः शुभ्राङ्गो नाम गोवत्सः तव प्रश्नस्य उत्तरं दातुम् अर्हति। उत्तिष्ठ । (निष्क्रान्तः)

नारदः – तथा । गच्छामि अधुना । (परिक्रम्यावलोक्य) इयमेव सा गोशाला । अत्रैव वसति स गोवत्सः । आह्वयामि तावत् । शुभ्राङ्ग, शुभ्राङ्ग !

शुभ्राङ्गः – को नु माम् आह्वयति ? कोऽस्ति द्वारे ?

नारदः – वत्स, एहि, भगवद्भक्तो नारदोऽस्मि ।

शुभ्राङ्गः – अहो स्वयं देवर्षिः मम द्वारमागतः । सफला मे मनोरथाः । प्रणमामि प्रभो !

नारदः – जीवनं ते चरितार्थं भूयाद् वत्स ! (गोवत्सः म्रियते ।) हा हतोऽस्मि । कथम् ? अयमपि मृतः ! मन्दभाग्योऽहम् । किं मे जीवितेन ? पातकी अहं जीवान्तकः । (भूमौ उपविशति । तस्य पृष्ठतः दण्डायमानो विष्णुः)

विष्णुः – वत्स नारद, उत्तिष्ठ ।

नारदः – हृदयेश, पातकी अहम् । मम दर्शनेन ...

विष्णुः – उत्तिष्ठ, अद्य महाराज उदयादित्यः पश्चिमवयसि पुत्रवान् । तस्य प्रासादे अद्य जनसमारोहः । तस्य नवजातपुत्रः तुभ्यं प्रदास्यति उत्तरम् ।

नारदः – क्षम्यतां देवेश, नेच्छामि उत्तरम् । मद्दर्शनेन स

राजपुत्रोऽपि मृत्युभाग् भवेत् । स च नृपस्य पश्चिमवयसः ऐश्वर्यम् । जीवान्तकोऽहं महापापी ।

विष्णुः—शृणु नारद !

नारदः—नारायण ! पुत्रवियोगेन पित्रोः कियत् दुःखं स्यात् ! प्रजाश्च अनाथाः स्युः ।

विष्णुः—अधुनैव नृपगृहं गत्वा राजपुत्रम् अवश्यं पश्य । (निष्क्रान्तः)

नारदः—प्रभो ! (भूमौ प्रणमति ।)

## अन्तिमं दृश्यम्

(महाराजः समासीनः)

प्रतीहारः—अहो देवर्षिनारदस्य शुभागमनम् ! सुधन्यं दिनम् ।

राजा—देवर्षे नारद ! परमशुभदिने अत्र आगमनं भवतः । अद्य पुत्रवान् अहम् । तस्मै आशीर्वादान् प्रदाय अस्मान् धन्यान् करोतु ।

नारदः—(आत्मगतम्) हे प्रभो करुणासागर ! दयस्व मयि । नेच्छामि शिशुं हन्तुम् । मा कुरु मां कलङ्कभागिनम् । (प्रकाशम्) राजन्, शिशोः दर्शनेन किम् ? इत एव आशीर्वचनं श्रावयामि । (उच्चैः वदति) वत्स, आयुष्मान् भव ।

मन्त्री—नहि देवर्षे ! भवतः पुण्यदर्शनेन तस्य जीवनं सार्थकं भविष्यति ।

राजा—पुत्रमुखदर्शनेन अनुगृह्णातु अस्मान् । प्रसीदतु प्रभो ।

नारदः—हृदयं मे स्पन्दते मनश्च चञ्चलं भवति । भगवन्, पाहि माम्, रक्ष शिशुं मृत्युमुखात् ।

राजा—प्रविशतु निःशङ्कं मुनिवर !

नारदः—तथा । (अन्ये निष्क्रान्ताः ।)

ज्योतिष्मान्—प्रणमामि प्रभुं नारददेवम् ।

नारदः—(तं प्रति दृष्टिक्षेपम् अकुर्वन्) चिरञ्जीवी भूयाः वत्स !

ज्योतिष्मान्—भवद्दर्शनेन सफलं मे जीवनम् महर्षे ! अपि नाभिजानाति माम् ?

नारदः—नहि ज्योतिष्मन् । (पृष्ठं परावर्तयति ।)

ज्योतिष्मान्—अलं शङ्कया । अहमेव आसं कीटः स्वर्णपादः । तस्मिन् योनौ भवन्तं दृष्ट्वा स्वकीटजन्मनः मुक्तिः अभवत् । ततो मुक्तोऽहं गोवत्सः शुभ्राङ्गः अभवम् । पुनश्च भवत्पुण्यप्रभावेण गोयोनिमुक्तः मानवयोनौ श्रेष्ठकुले जातः । अद्य च भवद्दर्शनेन मानवीयाः सकला विद्याः शैशवे एव अधिगताः । धन्योऽस्मि, कृतकृत्योऽस्मि भवतः सत्सङ्गलाभेन ।

नारदः—भो करुणामय प्रभो ! अमेया, अगम्या खलु ते लीला । यदि मादृशस्य अकिञ्चनस्य सत्सङ्गेन एतावत् पुण्यफलं तर्हि तव दिव्यदर्शनेन किं स्याद् असम्भवं त्रिभुवने !

# चोरपरीक्षा

पात्राणि – आबुः (चोरगुरुः), यूसुफः (शिष्यः),
रक्षिकः, मेषपालः, छागलौ ।

यूसुफः – अपि अस्ति गुरुदेवः आबुः अभ्यन्तरे ?

रक्षिकः – आम्, अस्ति सः ।

यूसुफः – (प्रविश्य, ध्यानासने स्थितम् आबुं प्रति) क्षम्यतां प्रभो ! नीरवध्याने वाधां जनयामि भवतः ।

आबुः – नहि वत्स ! उपविश । मया श्रुतं यत् त्वम् अतिशीघ्रं चोरविद्यां शिक्षसे ।

यूसुफः – दस्युराज ! किम् अविदितं भवतः ? अपि मम विद्या-शिक्षा समाप्ता ?

आबुः – विद्याशिक्षा कदापि न समाप्यते वत्स ! अनन्ता खलु चोरविद्या । किन्तु सत्यमेतत् यत् त्वं चोरकार्ये परम-पटुः । अधुना चल किञ्चिद् भ्रमावः । (किञ्चित् भ्रमित्वा) यूसुफ, अपि पश्यसि सुदूरे मेषपालम् आगच्छन्तम् ?

यूसुफः – आम् आम् । तेन सह आयाति कश्चित् श्वेतः छागलः ।

आबुः – किं त्वं मेषपालात् छागलम् अपहर्तुं शक्ष्यसि ?

यूसुफः – अवश्यम्, अधुनैव छुरिकया मारयिष्यामि । (छुरिकां दर्शयति ।)

आबुः—एवं नहि । त्वया तथा चोरणीयं यथा मेषपालः नैव बोधेत् यत् तस्य छागलः चोरितः इति ।

यूसुफः—आम्, तथा करोमि । अत्र लुक्कायमानो भवान् मम बुद्धिकौशलं पश्यतु । (आबुः वृक्षेषु लुक्कायते । यूसुफः किञ्चित् भ्रमन्) अनेन शोभनपादत्रेण लोभयामि मेषपालम् । (मार्गे पादत्रं क्षिप्त्वा वृक्षेषु प्रच्छन्नः तिष्ठति ।)

मेषपालः—(प्रविश्य) वनमार्गे कथम् एकं शोभनं पादत्रम् ! परन्तु दक्षिणपादः कुत्र ? (अन्विष्यति) केवलम् एकेन पादत्रेण किं मे भविष्यति ? गच्छामि अग्रे ।

यूसुफः—(मेषपालस्य पृष्ठतः मन्दं मन्दम् आगत्य स्वपादत्रम् उत्थापयन्) अधुना मेषपालात् अग्रे गत्वा दक्षिणपादस्य पादत्रं क्षेप्स्यामि । अनेन ह्रस्वमार्गेण अचिरमेव मेष-पालात् अग्रे प्राप्स्यामि । (यावत् मेषपालः दीर्घकुटिल-मार्गेण आयाति तावत् यूसुफः अग्रे अन्यपादस्य पादत्रं क्षिप्त्वा प्रच्छन्नः तिष्ठति ।)

मेषपालः—अरे समानं शोभनपादत्रम् अत्र पुनः ! नहि, एतत् तु दक्षिणपादस्य । पूर्वं मया वामपादस्य दृष्टम् । अधुना दक्षिणपादस्य । पादत्रयुगलं मदीयं भविष्यति । शीघ्रं गत्वा तद् आनेतव्यम् । मन्दगामी अयम् (छागलः) अत्रैव स्यात् । कोऽपि नास्ति । शीघ्रमेव आयास्यामि । (छागलं वृक्षे बद्ध्वा धावन् गच्छति)

यूसुफः – (वृक्षेभ्यः निर्गच्छन्) मूर्खं मेषपाल ! पादत्रे गते तव । कोमलमांसः छागलोऽपि । (छागलम् आदाय निष्क्रान्तः)

मेषपालः – (पूर्वस्थलं प्राप्य) कुत्र गतं तत् पादत्रम् ? (अन्विष्यति) मन्ये केनापि गृहीतम् । प्रतिगन्तव्यं तदा । (प्रत्यागत्य) किं पश्यामि ? कुत्र पादत्रम् ? अरे कुत्र छागलः ? अहो कष्टम् ! किं करवाणि ? पिता मां ताडयिष्यति । स तु धनम् इच्छति । पुनः अन्यः छागलः गृहात् आपणम् आनेतव्यो भवेत् । हा कष्टम् ! (निष्क्रान्तः)

आबुः – साधु वत्स यूसुफ, साधु । किं त्वं पुनरपि तस्मात् द्वितीयं छागलं चोरयितुं शक्नोषि ?

यूसुफः – अवश्यम् । पुनः तं छलयिष्यामि ।

आबुः – कथम् ?

यूसुफः – अहं किमपि करिष्यामि । यदा मेषपालः छागलात् दूरं गच्छति तदा भवान् तम् अपहरतु । (द्वौ अपि लुक्कायमानौ प्रतीक्षेते ।)

मेषपालः – (प्रविश्य) छागल, बन्धो, त्वां त्यक्त्वा कुत्रापि न गमिष्यामि, कुत्रापि नहि । (वृक्षेभ्यः यूसुफकृतच्छागलरवः श्रूयते ।) किमेतत् ! किं शृणोमि ? मम प्रियच्छागः माम् आह्वयति इव । वराकः कस्मात् कालात् अत्रैव वर्तते ! सौभाग्यं मम । जीवति सः । अन्वेषयामि

तावत् । (पुनः पुनः रवः श्रूयते । मेषपालः दूरात् दूरं गच्छति । अत्रान्तरे आबुः सुमन्दं द्वितीयच्छागलं चोरयति ।) कुत्र मम प्रथमच्छागः ? वहु अन्विष्यन् अपि न लभे । कुत्रापि न पश्यामि । किं कर्तव्यम् ? निवर्तनीयम् एव । (आगत्य) अहह, कुत्र मम द्वितीयच्छागः ? सोऽपि क्षणेन अपहृतः ! धिक् मन्दभाग्यम् ! पुनः छलितोऽहम् । भगवन्, अहं दरिद्रः, रक्ष माम् । (पृष्ठतः छागरवः श्रूयते ।) पुनरपि छलना भगवन् ! नहि, अहं न द्रक्ष्यामि । न एष मम छागलः ।

आबुः—सत्यम्, एष तवैव छागलः । न एकः, द्वौ । गृहाण एतौ ।

मेषपालः—(आनन्देन छागलौ आलिङ्ग्य) मम छागलौ, प्रियच्छागलौ ! मां त्यक्त्वा युवां कुत्र अगच्छतम् ?

आबुः—शृणु, एकमपि छागलं न विक्रीणीहि । धनमिच्छसि चेत् गृहाण । (धनप्रसेवं क्षिपति तं प्रति)

मेषपालः—(प्रसेवम् आदाय) भगवान् मङ्गलं करोतु भवतः ।

आबुः—यूसुफ, उत्तीर्णस्त्वं परीक्षायाम् । चल, दास्यामि ते समुचितम् उपहारं सम्मानपत्रं च ।

# गुरुभक्तिः

पात्राणि – गुरुकपिञ्जलः, अंशुमान्, सोमरातः, सन्तोषः, सत्यव्रतः (इमे चत्वारः मुनिकुमाराः), अग्निदेवः ।

### प्रथमं दृश्यम्

सोमरातः – चलत, चलत, खेलिष्यामः ।

अंशुमान् – आम्, शीघ्रम् एत ।

सन्तोषः – अरे धर कन्दुकम् । किं स्वपिषि ? धर्तुं न शक्नोषि ?

सत्यव्रतः – कथं क्षिपसि ! यदि अहम् एवं कुर्याम्, धर्तुं शक्ष्यसि ?
(अत्रान्तरे गुरुः आयाति । तम् अदृष्ट्वैव स्वस्वखेले मग्नाः बालाः) धर ।

अंशुमान् – अत्र मह्यं देहि । तत्र युवाम् एव खेलथः ।

सोमरातः – चल, आवां तत्र खेलिष्यावः ।

सत्यव्रतः – सोमरात ! कुत्र गन्तुकामः ? धर कन्दुकम् । आम्, एवम् ।

सन्तोषः – पश्यसि कथं खेलामि ! क्षिपामि एतत् बलेन । कः धर्तुं पारयेत् ? (सः क्षिपति । कन्दुकः गुरोः निकटे पतति ।)

सोमरातः – अहो गुरुदेवः अत्र तिष्ठति ।

सन्तोषः – क्षम्यतां भगवन् !

सत्यव्रतः—भवतः आगमनम् अस्माभिः न ज्ञातम् ।

अंशुमान्—कस्मात् कालात् भवान् प्रतीक्षते । वयं मूढाः भवतः अनादरं कुर्मः । क्षम्यताम् ।

गुरुः—अहं तु केवलं त्रिभ्यः पलेभ्यः प्रतीक्षे । अतः अवश्यं युष्मान् क्षंस्ये । किन्तु तस्य किं महत्त्वम् ? अनन्ता, अमेया खलु भगवत्क्षमा । तस्य क्षमाया एव अस्ति किमपि महत्त्वम् ।

सत्यव्रतः—क्षम्यतां गुरुदेव ! एतादृशः प्रमादः पुनः कदापि न भविष्यति ।

गुरुः—मत्तः क्षमाप्रार्थनेन को लाभः ? यदि युष्माकं हृदयं पश्चात्तापेन सत्यं दह्यते तर्हि अन्तर्गुरुं स्मरत । सत्य-हृदयेन तं क्षमां प्रार्थयध्वम् । सः अवश्यं प्रार्थनां श्रोष्यति युष्मान् च क्षंस्यते । अनन्तकालात् स युष्मान् प्रतीक्षते किन्तु यूयं तम् अवज्ञाय स्वस्वक्षुद्रव्यापारेषु मग्नाः । गच्छत । स्वलक्ष्यं स्मरन्तः, आश्रमकार्यम् अध्ययनं च कुर्वन्तः हृद्गुहायां स्थितं परमगुरुं प्रबोधयत । (प्रस्थितः)

सोमरातः—गुरुदेवस्तु गतः । अधुना यत् कुर्मः, स नैव द्रक्ष्यति ।

सत्यव्रतः—आम् आम्, चलत चलत, आम्राणि त्रोटयिष्यामः ।

सन्तोषः—अरे अंशुमन्, आगच्छ, आगच्छ । किम् उपविशसि तत्र ?

अंशुमान् – नहि नहि, गुरुदेवः अवदत् हृदयस्थितं गुरुं प्रबोधयत इति । अहं ध्यानं करिष्यामि ।

सोमरातः – अरे मुञ्च एनम् । कुर्यात् स ध्यानम् ।

सन्तोषः – आः पक्वानि आम्राणि !

सत्यव्रतः – देहि कन्दुकम्, त्रोटयामि तानि अधुना । (चेष्टते)

सन्तोषः – केवलम् एकम् अपतत् । अरे पश्य मम लक्ष्यवेधम् । (चेष्टते)

सत्यव्रतः – केवलम् एकमेव पत्रम् ! पश्य पुनः मम लक्ष्यवेधम्। (चेष्टते)

सोमरातः – साधु साधु, त्रीणि आम्राणि ! अस्तु, देहि कन्दुकम्, अहं चेष्टे ।

सन्तोषः – तवापि साधु लक्ष्यम् । एकेन मारेण द्वे आम्रे । अधुना मम वारः । (चेष्टते) ।

सत्यव्रतः – केवलं त्रुटिता शाखा पत्राणि च ।

सन्तोषः – अलं खेलेन । अद्य असाधु दिनम् । गच्छामि तावत्। क्लान्तोऽस्मि ।

सत्यव्रतः – अहमपि क्लान्तः, पठितुं गच्छामि । (द्वौ निष्क्रान्तौ)

सोमरातः – (अंशुमन्तम् उपगम्य) अरे, सर्वे तु गताः । पश्यामि तव लक्ष्यम् । उत्तिष्ठ । ... हे दुर्बलोऽयम् । मुञ्चामि एतम् । कुर्यात् स ध्यानम् । (गतः)

अंशुमान् – (किञ्चित्कालात् परं ध्यानात् उत्थाय) किं गत्वा

गुरुदेवं सर्वं कथयेयम् ? नहि, गुरुदेवस्तु आत्मज्ञानेन सर्वमेव जानाति । कथनेन किं प्रयोजनम् ?

## द्वितीयं दृश्यम्

(प्रातःकालः । सर्वे सूर्यनमस्कारं कुर्वन्ति ।)

सर्वे—ॐ पवित्रं तत् परं ज्योतिः सत्यं तदमृतं वपुः ।
इह सर्वाङ्गमस्माकमाक्रामज्ज्वलयेदपि ।।
(सर्वे सूर्यदेवं प्रणमन्ति ।)

गुरुः—अधुना प्रत्येकं बालकः स्वकर्मणि निरतो भवतु ।
(अंशुमान् कक्षं सम्मार्जयति ।)

सन्तोषः—अहं काष्ठानि आहर्तुं गच्छामि गुरुदेव !

गुरुः—तव मङ्गलं भवतु ! (सः निष्क्रान्तः ।)

सोमरातः—भगवन् ! अहं गोधनं चारयितुं गच्छामि ।

गुरुः—भगवान् त्वां प्रतिपदं रक्षतु । (सोऽपि निष्क्रान्तः ।)

सत्यव्रतः—अहं पठितुं गच्छामि गुरुदेव !

गुरुः—वर्धस्व वत्स, वर्धस्व । वत्स अंशुमन् ! अत्र आयाहि । उपविश । (उपविशति) कतिचिद्दिनेभ्यः त्वां किमपि वक्तुकामोऽहम् । अधुना प्राप्तः अवसरः । वत्स, अस्मिन् आश्रमे तव अध्ययनं समाप्तम् ।

अंशुमान्—कुतः गुरुदेव ! कुतः तावत् शीघ्रम् !

गुरुः—आम् वत्स ! तव विनम्राचारेण परमप्रसन्नोऽहम् । सत्यनिष्ठस्त्वं प्रतिपदं मम वचनं पालयन् वर्तसे ।

गुरुकुलं त्वादृशम् उत्कृष्टं शिष्यं लब्ध्वा धन्यम्। इतः प्रभृति प्रतिपदम् अन्तर्गुरोर्वचनं श्रुत्वा परज्योतिरभिमुखं वर्धस्व । अधुना स एव ते गुरुः । स त्वां परमानन्दं प्रापयिष्यति। भगवन्तं कदापि मा विस्मर । याहि वत्स ! शुभमस्तु ते । (शिष्यस्य नेत्रयोः अश्रुधारा) वत्स, एतत् किम् ? तव नेत्रयोः अश्रुधारा !

अंशुमान् – (अश्रूणि अवमृज्य) गन्तव्यम् ... परन्तु कां गुरुदक्षिणां दद्याम् ?

गुरुः – गुरुदक्षिणा ? गुरुदक्षिणया किं प्रयोजनम् ? त्वम् उत्तमच्छात्रः। इयमेव मे गुरुदक्षिणा। नाहम् अन्यत् किमपि इच्छामि।

अंशुमान् – किन्तु अहं किमपि दातुम् इच्छामि। यत् किमपि भवतु ।

गुरुः – यदि तावत् दातुमिच्छसि तर्हि शृणु सावधानम्। इतो बहुदूरे पूर्वदिशि प्रवहति कापि पुण्यतोया नदी । तत्तीरे ज्वलति महान् पवित्राग्निः । यदि सूर्योदयात् पूर्वं मद्दत्तं पवित्रं जलं तदग्नौ समर्पयसि तर्हि ब्रह्मसिद्धिर्भवेत् मम अवश्यम् । कार्ये विफलीभूते मया पुनः द्विशतं वर्षाणि प्रतीक्षणीयम्। अनेन जराग्रस्तशरीरेण किं तत् सम्भवम् ? अन्यच्च, हस्तपुटयोरेव तत् पूतजलं नेतव्यम् । अप्येतत् दुष्करं कर्म कर्तुं शक्ष्यसि वत्स ?

अंशुमान्—आम्, अवश्यम्। भवतः आशीर्वादैः सर्वमपि कर्तुं शक्यम्।

गुरुः—श्वः महाप्रभाते आयाहि। गच्छ अधुना। (अंशुमान् प्रणम्य निष्क्रान्तः। गुरुदेवो ध्यानस्थः।)

## अन्तिमं दृश्यम्

(गुरुः ध्यानस्थः। अंशुमान् साञ्जलि प्रविशति। गुरुः नेत्रे उन्मील्य)

गुरुः—आगच्छ वत्स! गृहाणेदं मन्त्रपूतं जलम्। मा विस्मर यत् हस्तपुटयोरेव नेतव्यम्। सूर्योदयात् पूर्वमेव तत् अग्नौ समर्पणीयम्। गच्छ वत्स, भगवन्तं स्मर। सोऽवश्यं त्वां रक्षिष्यति। शिवाः सन्तु ते पन्थानः। (अंशुमान् प्रणम्य, जलमादाय निष्क्रान्तः। गुरुः क्षणं शान्तं स्थित्वा) वत्स सन्तोष! अधुनैव मया अंशुमान् नदीतटं प्रेषितः। गोपनतया तम् अनुगच्छन् तस्य सर्वमपि कार्यं निरीक्षस्व। तदनु मह्यं निवेदय सर्वम्। (भिन्नदिशाभिमुखं निष्क्रान्तौ द्वावपि।)

(अंशुमान् दुर्गमपथम् अतिक्रामति। पादः कण्टकैर्विद्धः इति नाटयन् सः अग्रे सरति। सन्तोषः तम् दूरात् अनुगच्छति।)

अंशुमान्—(सानन्दम्) अहो अदूरे अग्निकुण्डं दृश्यते। किन्तु पूर्वाकाशः अरुणायते। अधुनैव सूर्योदयः भवेत्। मम

हस्तपुटयोः जलमपि अल्पीभवति। यदि धावेयं सर्वं निपतेत्, यदि मन्दं गच्छेयं सूर्योदयो भवेत्! किं कुर्याम्? भगवन्, सुबुद्धि देहि। आम्, सर्वं जलं पीत्वा आत्मानम् अग्नौ समर्पयिष्यामि। (धावन् अग्नौ निपतति।)

सन्तोषः—(शिरस्ताडं प्रविश्य) किमेतत् कृतं त्वया अंशुमन्! शीघ्रं गत्वा गुरवे निवेदनीयम्। (निष्क्रान्तः)। (धावन् प्रविश्य) गुरुदेव, गुरुदेव, अनर्थः, महाननर्थः!

गुरुः—(प्रविश्य) किं जातं वत्स? वद किं जातम्! कुतः कम्पसे त्वम्?

सन्तोषः—अंशुमान् तत् जलं पीत्वा आत्मानम् अग्नौ न्यक्षिपत्।

गुरुः—अग्नौ न्यक्षिपत्? विलम्बनिवारणाय, मम सिद्ध्यर्थं च आत्मबलिदानम्! बालशिष्यस्तु गतः। किमनेन वृद्ध-शरीरेण? नय माम्, तत्रैव नय। (भ्रमित्वा तत्र प्राप्य) अहो धन्यस्त्वम् अंशुमन्! धन्यं तव गौरवम्। अपूर्वा तव गुरुभक्तिः। हे अग्निदेव, इदं वृद्धं शरीरं निष्प्राणं कुरु। अंशुमतः हृदयं प्राणैः स्पन्देत। पुनरपि तस्य शिराधमनीषु रक्तं प्रवहेत्। अहं प्राणान् विसर्जयामि। हे अग्निदेव, गृहाण माम्।

ॐ अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान्।

युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम ॥

अग्निदेवः—उपाध्याय कपिञ्जल ! एष तव पुण्यात्मा शिष्यः। अस्य बालजीवनम् अपहृत्य को मे लाभः ? एतादृशैः सुशिष्यैः पृथिवी कृतार्था भवेत् । आचार्य ! अधुना सिद्धा ते साधना ।

गुरुः—वत्स, त्वमागतः ! (आलिङ्ग्य) आयुष्मान् भव । मया किन्तु इहलोकः त्यक्तव्यः ।

अंशुमान्—नहि गुरुदेव, नहि ।

गुरुः—शृणु, वृथा हठं मा कुरु। अनेन वृद्धशरीरेण न किमपि शक्यम् । मङ्गलकर्मा त्वम् आश्रमं परिचालय । सम्पूर्णाश्रमभारं त्वयि सन्न्यस्य गच्छामि ।

अंशुमान्—मैवं तात ! अहं भवन्तं विना क्षणमपि जीवितुं न इच्छामि ।

अग्निदेवः—कपिञ्जल ! अंशुमान् सुष्ठु भाषते । अधुनैव तं त्यक्त्वा गन्तुं नार्हसि त्वम् । आश्रमः अंशुमतः तत्त्वावधाने सुप्रतिष्ठः भवतु। तस्य आलम्बो भव। काले सञ्जाते अहं स्वयमेव त्वाम् आनन्दलोकं नेष्यामि। युवयोः शरीरधारणेन शुभं भवतु पृथिव्याः। (गुरुशिष्यौ प्रणमतः। नेपथ्ये श्रूयते)

ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारं रत्नधातमम् ।

# पापकृत् पापमश्नुते

पात्राणि – उद्यानपालकः, यमः, महिषः, ब्राह्मणः, इन्द्रः ।

### प्रथमं दृश्यम्

उद्यानपालकः – हाः कार्यं समाप्तम् ! उद्यानम् अधुना कीदृक् सुन्दरं दृश्यते ! मया एव सर्वं कृतम् । किन्तु यदि भगवत्कृपा न अभविष्यत् तर्हि किम् इदं कार्यं सफलम् अभविष्यत् ? अद्य तु उद्यानं सत्यं शोभनं दृश्यते । मन्ये इन्द्रस्य उद्यानात् अपि शोभनतरम् । अधुना यदि मां कोऽपि पृच्छेत्, "किं कार्यं कृतं त्वया पृथ्वीलोके" तर्हि सगर्वं तं वदेयम् – "पश्यतु इदम् उद्यानम्, मया एव रचितम् । किं नेदं सुन्दरम् ?" स्वहस्ताभ्याम् उद्योगी पुरुषः किं किं न करोति ? (कार्यं कुर्वन्) सर्वे मादृशा एव भवेयुः ।

यमः – (प्रविश्य) क्षुद्रजीवोऽयं तथा गर्वं करोति ! पश्यामि तस्य स्वभावम् । गच्छ महिष ! उद्यानं प्रविश्य यथेष्टं खाद । (महिषः प्रविश्य खादति)

उद्यानपालकः – अरे रे रे रे ... किं करोषि, किं करोषि, अपेहि, अपेहि, सर्वं नाशयसि । किं करोमि ? रे एष त्वां ताडयित्वा बहिष्करोमि । तिष्ठ, आयामि । अरे किं न

गच्छसि ? गच्छ, गच्छ । (भृशं ताडयति महिषश्च म्रियते) हुं दुष्ट ! साधु, म्रियस्व । मम उद्यानं नाशितम् । पुनः नूतनं रचनीयम् । गच्छामि आपणात् पादपान् क्रीत्वा आनयामि ।

ब्राह्मणः – (प्रविश्य) चलन् चलन् क्लान्तोऽहम् । क्षुधितोऽस्मि । यदि कुत्रापि आश्रयं प्राप्नुयाम्, उपविशेयं किञ्चित् । सुन्दरम् इदम् उद्यानम् । प्रविशामि । पुष्पैः शोभितम् उद्यानम् । फलभारैः आनताः वृक्षाः । सर्वत्र शीतला छाया । रमणीयस्तडागोऽपि वर्तते । उपविशेयम् अत्र छायायाम् । किन्तु कोऽस्य पालकः ! अत्र रसमयानि आम्राणि, तत्र सुपक्वानि पेरुकाणि । अदूरे सुमधुराणि द्राक्षाफलानि । खादेयं किमपि । (उत्थाय) अरे कोऽस्ति ? कोऽपि अस्ति किम् ? विचित्रम् ! कोऽपि न उत्तरयति । क्षुधितोऽहम् । किमपि खादेयं किम् ? कोऽपि न शृणोति । एकं पेरुकं खादामि । कः किं वा कथयिष्यति ? (अवचित्य खादति) च्च, कियत् सुस्वादु !

उद्यानपालकः -- चोर ! कियत् सुस्वादु ? एतदपि सुस्वादु (इति ताडयति । ब्राह्मणः मृतः ।) एकस्मिन् दिने द्वौ कीटौ गतौ ।

यमः – अधुना तृतीयकीटोऽपि गमिष्यति ।

उद्यानपालकः – अरे कस्त्वम् ? किमिच्छसि ?

यमः – अहं यमराजः, आगतः तव प्राणान् हर्तुम् ।

उद्यानपालकः—किन्तु इहलोके मम कार्यं न समाप्तम् ।

यमः—चल अधुना । अद्य पशुहत्या कृता, ब्रह्महत्या कृता; अलं पापेन ।

उद्यानपालकः—किन्तु मया पापं न कृतम् ।

यमः—मिथ्यावादी ।

उद्यानपालकः—नहि यमराज ! अनेन दक्षिणहस्तेन कृतम् । दक्षिणहस्तः इन्द्रस्य । स तं रक्षति । यस्य हस्तः, तस्य पापम् । तस्य प्राणान् हरतु । किमर्थम् अत्र आगतः ?

यमः—(स्वगतम्) अयं यत् वदति तत् उचितम् । इन्द्रस्य सकाशं गच्छामि । (निष्क्रान्तः)

## द्वितीयं दृश्यम्

इन्द्रः—स्वागतं ते यमराज ! तव कां सेवां कुर्याम् अस्मिन् वारे ? किं कष्टम् आपतितम् इति ज्ञातुं शक्नोमि किम् ?

यमः—महती आपद् । देवेन्द्र ! महती आपद्, न मम, तव । विचित्रम् एतत् यत् स्वयं देवराजः इन्द्रोऽपि पापम् आचरति !

इन्द्रः—अहं पापम् आचरामि !! किं वदसि त्वम् ? कृपया स्पष्टं कथय ।

यमः—आम्, अहं सत्यं वदामि । सुरराज इन्द्रस्त्वं दक्षिण-हस्तस्य रक्षकः । तस्मात् दक्षिणहस्तेन कृतं पापं तवैव ।

त्वया अद्य पशुहत्या ब्रह्महत्या च कृता । यद्यपि त्वं मम राजा·तथापि त्वां नरकं नेष्यामि एव ।

इन्द्रः – (ध्यायति) अवश्यं नरकं गमिष्यामि सूर्यपुत्र ! किन्तु प्रथमं पृथ्वीलोके तम् उद्यानपालं द्रष्टुम् इच्छामि । चलतु ।

## अन्तिमं दृश्यम्

इन्द्रः – (द्वौ छद्मवेशेन प्रविश्य) पश्यसि बन्धो ! कीदृक् सुन्दरम् उद्यानम् ! रमणीयानि पुष्पाणि, मधुराणि फलानि । गृहे उद्यानपालः अस्ति किम् ?

उद्यानपालकः – आम्, अयम् अहम् अत्र ।

इन्द्रः – कस्येदम् अपूर्वम् उद्यानम् ?

उद्यानपालकः – कथं प्रश्नं करोषि ? एतत् मम एव । मया रचितम्, मया कृतम्, सर्वं मम एव । ओ त्वं मम उद्यानं द्रष्टुम् आगतः ! आगच्छ, आगच्छ ।

इन्द्रः – कीदृक् मनोहरं वातावरणम् ! ग्रीष्म-ऋतौ अपि कोकिलाः कूजन्ति, शीतलवायुः पुष्पाणां सुगन्धम् आवहति, वृक्षाः फलैः परिपूर्णाः ।

उद्यानपालकः – आम् आम्, इयमेव मम उद्यानस्य शोभा, इदमेव तस्य गौरवम् ।

इन्द्रः – किं त्वम् एकल एतत् सर्वम् अकरोः ?

उद्यानपालकः – (मस्तकं चालयन्) सर्वम् एकल एव अकरवम् । दक्षिणबाहुबलेन एतत् महत् कार्यं सम्पन्नम् ।

इन्द्रः—अस्य अर्थः सर्वमपि पुण्यं तव एव ?

उद्यानपालकः—पुण्यं मम न भविष्यति, किं तव भविष्यति ?

इन्द्रः—(यमं प्रति) बन्धो ! सत्यं सुन्दरम् उद्यानम् । इन्द्रस्य मनोऽपि अत्र आसक्तं भवेत् । यदि स जानीयात्, स्वर्गपुरीं त्यक्त्वा अत्र निवसेत् !

यमः—(साश्चर्यम्) अरे अत्र एको दरिद्रः ब्राह्मणः मृतवत् दृश्यते !

उद्यानपालकः—दृश्यते किम् ? सत्यं मृत एव ।

इन्द्रः—किन्तु कथम् ?

उद्यानपालकः—उद्यानात् फलानि चोरयति स्म, एकेन प्रहारेण स्वर्गलोकं प्रेषितः । चोरः !

इन्द्रः—सामान्यफलस्य कृते स मारितः ?

उद्यानपालकः—सामान्यफलस्य कृते इति ? किमिदम् अल्पम् ? साधु अभवत् । एतादृशानां चोराणाम् अर्थे पृथिव्यां स्थानं नास्ति । दुष्टः ! चोरः ! कीटः !

यमः—अरे अत्र एकः स्थूलो महिषोऽपि दिवं गतः !

उद्यानपालकः—आम् आम्, अद्य तमपि अमारयम् । मम उद्यानं नाशयति स्म, कथनेन अपि न अगच्छत् । पञ्चवारं ताडनेन पञ्चत्वं गतः ।

यमः—एकस्मिन् दिने ब्रह्महत्या, पशुहत्या ! भवान् अवश्यं नरकं गमिष्यति ।

उद्यानपालकः – अरे नहि । यमराजः आगतः आसीत् । स इन्द्रलोकं प्रेषितः ।

इन्द्रः – किमर्थम् ?

उद्यानपालकः – अरे एतावत् न बोधसि ? अनेन दक्षिणहस्तेन मारितम् । दक्षिणहस्तम् इन्द्रः रक्षति । तस्य हस्तः, तस्य पापम् । मम तत्र किम् ?

इन्द्रः – (छद्मवेशम् अपाकृत्य) मूढ ! अहं स्वयं देवराज इन्द्रः । यदा तव दक्षिणहस्तः किमपि साधु करोति तदा पुण्यं भवति तव । यदा किमपि असाधु करोति, पापं भवति मम ! यमराज ! शीघ्रम् अस्य कर्णं धृत्वा नरकं नयतु ?

यमः – (छद्मवेशम् अपाकरोति) उत्तिष्ठ रे महिष ! (स उत्तिष्ठति) ।

इन्द्रः – उत्तिष्ठ दरिद्रब्राह्मण ! (सोऽपि उत्तिष्ठति ।) (यमः उद्यानपालकं कर्णेन धृत्वा नयति ।)

# एकदा रङ्गमञ्चे

पात्राणि – हरिश्चन्द्रः, विश्वामित्रः, महामन्त्री, तारामतिः, रोहितः, चाण्डालः, प्रतिहारः, दीपकार्यः (ग्रामवासिनां मुख्यः), ब्राह्मणः ।

## प्रथमं दृश्यम्

(ग्रामवासिनः आलपन्ति)

देशिकः – अद्य ग्राममुख्यः दीपकार्यः किमर्थम् आह्वयत् अस्मान् ?

राजीवः – न जाने । अवश्यम् ग्रामस्य मङ्गलार्थम् ।

विकासः – तत्तु सत्यम् । किमपि विशेषकार्यम् अथवा ...

कविता – अस्तु, यत् किमपि भवेत् । एष दीपकार्यः स्वयम् आगच्छति । तमेव पृच्छ ।

दीपकार्यः – (प्रविश्य) भो ब्राह्मणाः ! शिवरात्रिरागच्छति । अत्र ग्रामे महोत्सवः भविष्यति । बहवः जनाः दूरदेशेभ्यः आगमिष्यन्ति । अहं मन्ये, तेषां मनोरञ्जनार्थं किमपि नाटकं कुर्याम । तदा अस्माकं ख्यातिः ग्रामान्तरेषु प्रसरिष्यति । किं शिवस्य कामपि कथां नाटयेम ?

बालोरः – नहि, नहि, रामायणात् किमपि ।

हिमांशुः – तत्तु सर्वदैव भवति । महाराज-हरिश्चन्द्रस्य नाटकं करिष्यामः ।

सर्वे—आम्, आम्, साधु ।

दीपकार्यः—किन्तु कः हरिश्चन्द्रः भवेत् ?

सुचारुः—अहं हरिश्चन्द्रः ।

देशिकः—नहि, नहि, अहं हरिश्चन्द्रः ।

राजीवः—सुचारुः स्थूलकायः । देशिक एव राजा भवेत् ।

विकासः—नैव, सुचारुः एव राजा स्यात् । देशिकः अतिकृशः ।

दीपकार्यः—अस्तु, एकः हरिश्चन्द्रः भवेत्, अन्यः विश्वामित्रः ।

सुचारुः—अहं हरिश्चन्द्रः ।

देशिकः—नैव, अहं हरिश्चन्द्रः । त्वं विश्वामित्रः ।

सुचारुः—किं वदसि ? दर्शयामि अधुना ?

दीपकार्यः—अलं कलहेन । पूर्वम् अन्यानि पात्राणि निश्चित्य परं द्रक्ष्यामः । कविता तारामतिः भवेत् ।

हिमांशुः—अतुलः रोहिताश्वः भवेत् ।

दीपकार्यः—स्वीकरोषि त्वम् अतुल ?

अतुलः—आम् आम्, अवश्यम् ।

दीपकार्यः—बलराम, त्वं ब्राह्मणः । विकास, त्वं महामन्त्री । किन्तु प्रतिहारः कः स्यात् ?

कविता—हिमांशुः उत्तमः प्रतिहारः ।

बालोरः—नहि, हिमांशुः स्थूलः, कोऽपि कृशः प्रतिहारः भवेत् ।

दीपकार्यः—तर्हि राजीवः प्रतिहारः भवतु हिमांशुश्च चाण्डालः ।

हिमांशुः—साधु, सम्मतम् ।

दीपकार्यः—अधुना हरिश्चन्द्रः निश्चेतव्यः ।

देशिकः—अहं हरिश्चन्द्रः ।

सुचारुः—नैव, असम्भवम् । अहं हरिश्चन्द्रः ।

देशिकः—गच्छ गच्छ, वर्बर युवक !

सुचारुः—शान्तो भव । अन्यथा कृशकायं त्वाम् अङ्गुलिभिः मोटयिष्यामि ।

दीपकार्यः—कलहः, कलहः, कलहः । इमे सर्वथा शिशुवत् कलहायन्ते । अहम् अत्रैव अस्मि । मम वार्तां किञ्चित् श्रृणुत । सुचारुः हरिश्चन्द्रः भवतु देशिकश्च विश्वामित्रः ।

सुचारुः—आम्, यतो हि स कृशकायः, स एव विश्वामित्रः भवतु ।

देशिकः—मया पूर्वं कथितम्, अतः अहं हरिश्चन्द्रः ।

दीपकार्यः—युवयोः कलहं श्रुत्वा मम मस्तकं व्यथते । न जाने, कथं नियन्त्रयिष्यामि युवाम् । विचारम्, विचारम् इच्छामि अधुना । कस्यापि मस्तके यदि कोऽपि विचारः स्फुरति, कथयेत् स मां कृपया ।

विकासः—मम कश्चित् विचारः अस्ति । उत्सवकाले नाटकं बहुदिनानि प्रचलिष्यति । तदा एकस्मिन् दिने सुचारुः हरिश्चन्द्रः भवेत्, अन्यस्मिन् दिने देशिकः ।

दीपकार्यः—आम् साधु, साधुविचारः अयम् । एतदेव भवतु । (सुचारु-देशिकौ प्रति) प्रसन्नौ युवाम् ?

सुचारुः—किन्तु प्रथमदिने कः हरिश्चन्द्रः भविष्यति ?

दीपकार्यः—तदहं परं निश्चेष्यामि । अधुना प्रतिगम्यताम् । श्वः प्रभाते अहं सर्वेभ्यः तत्तद्भागान् दास्यामि । तान् स्मृत्वा यदा सज्जाः भविष्यथ तदा नाटकार्थं मेलिष्यामः । पुनर्दर्शनाय तावत् ।

सर्वे—पुनर्दर्शनाय आर्य ! (निष्क्रान्ताः सर्वे)

## द्वितीयं दृश्यम्

दीपकार्यः—अद्य प्रथमदिने एव विलम्बिताः सर्वे । अरे यूयम् आगच्छथ न वा ? अष्टवादनं जातम् । अधुना अभ्यासः कर्तव्यः ।

नेपथ्यात्—आम् आम् आर्य ! आगच्छामः ।

देशिकः—(प्रविश्य) आर्य, अद्य अहं हरिश्चन्द्रः ।

दीपकार्यः—अस्तु, अद्य त्वमेव भव ।

देशिकः—अहो प्रथमम् अहमेव हरिश्चन्द्रः ।

सुचारुः—देशिक, स्वीकरोषि त्वम् ? श्वः प्रभृति एकदा अहं हरिश्चन्द्रः, अन्यदा त्वं विश्वामित्रः ।

देशिकः—अवश्यं स्वीकरोमि । तदेव तु निश्चितम् आसीत् ।

सुचारुः—स्वीकरोषि त्वम् ? पुनर् विचारय । एकदा अहं हरिश्चन्द्रः, अन्यदा त्वं विश्वामित्रः ।

देशिकः—आम् स्वीकृतं मया । एकदा त्वं हरिश्चन्द्रः, अन्यदा अहम् । किमुक्तम् ? पुनर्वद ।

सुचारुः—अन्यदा त्वं विश्वामित्रः ।

देशिकः—नैव । तस्य अर्थः—त्वं सदा हरिश्चन्द्रः, अहं सदा विश्वामित्रः ? कथयति एषः—एकदा स हरिश्चन्द्रः, अन्यदा अहं विश्वामित्रः । हुम् ! विस्मर एतत् ।

दीपकार्यः—पुनः स एव कलहः । अलम्, अलम् । आरभामहे अधुना । राजीव, त्वं प्रतिहारः । द्वारे तिष्ठ । वामपार्श्वे तिष्ठ । आम् । ततस्त्वं यदा महाराजस्य आगमनं घोषयिष्यसि तदा स प्रवेक्ष्यति । चल, आरभस्व ।

राजीवः—(कण्ठं शोधयन्) महाप्रतापी, महादानी (नेत्रे विस्फार्य पुनः पुनः समानं वदति ।)

दीपकार्यः—आम्, अधुना अग्रे सर । नष्टा स्वरस्थाली इव पुनः पुनः समानं कुतः जपसि ?

राजीवः—आर्य, अहम् अधुनैव अभ्यस्यामि । यदि नाटकदिने विस्मरेयं तदा कथं वदेयम् ?

दीपकार्यः—मूर्ख ! 'कथं वदेयम्' ? तस्यार्थः—किं प्रत्येकवाक्यम् अत्र दशवारं वदिष्यसि ? आरभस्व ।

राजीवः—महाप्रतापी, महादानी, क्षमाशीलः, सत्यवादी महाराजहरिश्चन्द्रः सभाम् आगच्छति ...

(ततः सैनिक इव चलन् राजा प्रविशति । विकासः हसति ।)

देशिकः—किं हससि मूढ ?

दीपकार्यः—भवान् राज्ञः कतमः सेनापतिः देशिकदेव ?

देशिकः—अहं राजा, न सेनापतिः ।

दीपकार्यः—तर्हि सेनापतिरिव किं चलसि ? एवं चल । (दर्शयति) आम् साधु । अग्रे वद ।

देशिकः—नमः सूर्यदेवाय । महामन्त्रिन् !

विकासः—आज्ञापयतु देवः ।

राजा—अपि देशे सर्वं कुशलम् ?

महामन्त्री—यदा भवान् साधूनां भक्षकः, देशे अमङ्गलं कुतः ?

दीपकार्यः—मूढ, किं वदसि ? भक्षकः नहि, रक्षकः ।

महामन्त्री—आम् तदेव । यदा भवान् साधूनां रक्षकः इत्यादि इत्यादि । अग्रे वदामि । महाराज ! भवतः कृपया . . .

राजा—शृणोतु भवान् । अधुना अहं न भवतः राजा । राज्यम् अन्यस्य ।

महामन्त्री—अस्यार्थः ? अहं भवतः वचनं न बोधामि ।

राजा—न बोधसि ? बोधयामि । ह्यः रात्रौ . . .

दीपकार्यः—देशिक, त्वम् अधुना राजा । पादौ घृष्ट्वा घृष्ट्वा कथं चलसि ?

विकासः—एकदा स सैनिकवत् चलति, अधुना पादौ घृष्ट्वा चलति । तस्मात् अवदम्—सुचारुः एव राजा भवतु ।

राजीवः—किमर्थम् ? किमर्थम् ? प्रथमदिने कोऽपि सर्वं जानाति ? त्वं बहु वदसि । दर्शय कृत्वा ।

दीपकार्यः—अस्तु, शान्तम् । स्मर, पादौ घृष्ट्वा न चल । अग्रे वद । ह्यः रात्रौ . . .

देशिकः—आम्, ह्यः रात्रौ मया कोऽपि अद्भुतस्वप्नः दृष्टः ।

महामन्त्री – कः स स्वप्नः ? (जृम्भते)

राजा – मूर्ख ! जृम्भसे किम् ? स्वपिषि ?

विकासः – तव अभिनयं दृष्ट्वा यः कोऽपि स्वप्स्यति, दर्शका अपि स्वप्स्यन्ति, अहं कः ?

देशिकः – ताडयिष्यामि ।

दीपकार्यः – अस्तु, अहं पश्यामि, अधुना नाटकेन क्लान्ताः यूयं तत् कर्तुं न इच्छथ । गच्छत । अद्यतनः अभ्यासः समाप्तः । श्वः मेलिष्यामः ।

राजीवः – पश्यसि विकास ? त्वत्कारणात् एव अद्य अभ्यासः स्थगितः ।

सुचारुः – तस्मिन् किमर्थं दोषम् आरोपयसि ? दोषः तु देशिकस्य ।

दीपकार्यः – ॐ शान्तिः शान्तिः शान्तिः । अलं कोलाहलेन अधुना । गृहं गच्छत । (निष्क्रान्ताः सर्वे)

## तृतीयं दृश्यम्

दीपकार्यः – (नेपथ्याभिमुखः) अपि स्मरन्ति सर्वे अद्य शिवरात्रिः इति । होरायाः परं कार्यक्रमः आरभ्यते । अपि सज्जाः सर्वे ? कोऽपि न उत्तरति ! किं करोमि ? अरे राजीव ! विकास ! कुत्र युवाम् ? आगच्छतम्, नेपथ्ये सर्वे किं कुर्वन्ति ?

राजीवः – (धावन् प्रविश्य) आर्य, सर्वे प्रायः सज्जाः । सुचारुः हरिश्चन्द्रस्य वेशं धारयति ।

दीपकार्यः – कथं स धारयति ? देशिकः कुत्र ?

राजीवः – देशिकः नास्ति । सुचारुः वदति – ह्यः दीपकार्यः अकथयत् यत् यः प्रथमं हरिश्चन्द्रस्य वेशं धारयति, स एव हरिश्चन्द्रः भविष्यति ।

दीपकार्यः – आम्, मया एवं कथितम् । किन्तु देशिकः कुत्र ?

विकासः – (प्रविश्य) आर्य, देशिकः अधुनापि स्वपिति ।

दीपकार्यः – स्वपिति ? गच्छतम् । शीघ्रम् आनयतं तम् अत्र । (द्वौ अपि निष्क्रान्तौ) कथम् अयम् अधुनापि स्वपिति ? हे महादेव ! अद्य शिवरात्रौ नाटकस्य दशां पश्यसि ? जनाः किं कथयिष्यन्ति ? (देशिकेन सह राजीवविकासौ प्रविशतः)

दीपकार्यः – (मस्तके कपोले च ईषत् ताडयन्) स्वपिषि ? उत्तिष्ठ, जागृहि, जागृहि, किं करोषि देशिक ? जागृहि ।

देशिकः – हुम्, किं जातम्, किं जातम् ? (जागरित्वा) आर्य, दीपकार्य ! सर्वे किमर्थम् एवं पश्यन्ति माम् ? अहो अद्य शिवरात्रिः । कथं निद्राबलेन न स्मरामि किमपि ?

दीपकार्यः – आम् शिवरात्रिः । नाटकस्य समयः सञ्जातप्रायः । गच्छ, सुचारुः हरिश्चन्द्रस्य वेशं धारयति, त्वं शीघ्रं गत्वा विश्वामित्रस्य वेशं धारय । (राजीवविकासौ

प्रति) गच्छतं युवाम् । स्वस्ववेशं धारयतम् । (निष्क्रान्तौ)

देशिकः—नहि आर्य, अहं न विश्वामित्रः । अद्य अहं हरिश्चन्द्रः ।

दीपकार्यः—असम्भवम् । तव शोभना दाढिका अस्ति । त्वमेव विश्वामित्रः भव ।

देशिकः—दाढिकां कर्तिष्यामि अहम् । आर्य, अहम् ...

दीपकार्यः—हठं मा कुरु । मया कथितम्—यः प्रथमं हरिश्चन्द्रस्य वेशं धारयति, स एव हरिश्चन्द्रः भविष्यति । शीघ्रं गच्छ । अन्यथा स स्थूलकायः पूर्वम् अत्र आगमिष्यति ।

देशिकः—सः कार्तिकेय इव पृथिवीं परिक्रामति । अहं त्रिवारं त्वां परिक्रामामि । मह्यं हरिश्चन्द्रोपहारं देहि । (इति तं परिक्रामति)

दीपकार्यः—देशिक, विरम । न अयं खेलसमयः । शृणु, मुनिः कृशकायः भवेत् राजा च स्थूलकायः ।

देशिकः—स स्थूलः यदि राजा भवेत्, मञ्चे पतित्वा गर्तं करिष्यति । तस्य अभिनयं दृष्ट्वा श्वः कोऽपि न आगमिष्यति । अतः अहमेव हरिश्चन्द्रः भवेयम् ।

दीपकार्यः—गच्छसि न वा दुर्बलयुवक ? कृशः त्वं वायुना उड्डयिष्यसे, त्वं किं राजा भविष्यसि ? अरे सुचारो, शीघ्रमायासि न वा ?

सुचारुः—(नेपथ्यात्) आयामि, आयामि ।

दीपकार्यः—शृणोषि मूर्ख ! सुचारुः प्रायः सज्जः । गच्छ शीघ्रम् ।

देशिकः—सकृत् वदतु त्वं हरिश्चन्द्रः इति, अधुनैव गमिष्यामि ।

दीपकार्यः—अधुना नाटकस्य समयः भवति, गच्छ शीघ्रम् ।

देशिकः—तदा अहं हरिश्चन्द्रः ?

दीपकार्यः—पुनः स एव कीटः ! सुचारो, शीघ्रमायाहि । अयं मम मस्तकव्यथां करोति ।

सुचारुः—माला धारयित्वा आयामि . . .

दीपकार्यः—गच्छ देशिक ! गच्छ विश्वामित्र !

देशिकः—हरिश्चन्द्रः ।

दीपकार्यः—विश्वामित्रः ।

देशिकः—अवश्यं हरिश्चन्द्रः ।

दीपकार्यः—अवश्यं विश्वामित्र एव भविष्यसि ।

देशिकः—नहि, अहं हरिश्चन्द्रः ।

दीपकार्यः—असम्भवम् । शीघ्रं विश्वामित्रवेशं धारय ।

देशिकः—कृपया हरिश्चन्द्रः ।

दीपकार्यः—नहि, सुचारो !

सुचारुः—(धावन् प्रविश्य) आगतोऽस्मि ।

दीपकार्यः—(दीर्घं निःश्वस्य) अस्तु, तर्हि सुचारुः हरिश्चन्द्रः । देशिक ! समयः अत्यल्पः । शीघ्रं विश्वामित्रो भव । चल हरिश्चन्द्र ! (निष्क्रान्तौ)

सुचारुः – (स्वगतम्) तर्हि मम निद्राचातुर्यं कार्यम् अकरोत् । साधु ।

देशिकः – कथमद्य अहं न हरिश्चन्द्रः ? मम सर्वा आशा नष्टाः । किं करोमि ? किं करोमि ? (भ्रमन्) आम्, जानामि । द्रक्ष्यसि मम कोपम् । आम्, द्रक्ष्यसि, द्रक्ष्यसि अद्य विश्वामित्रस्य कोपम् । (निष्क्रान्तः)

राजीवः – (धावन् प्रविश्य) आर्य, आर्य !

दीपकार्यः – किं जातम् ?

राजीवः – देशिकः कुपितः ।

दीपकार्यः – कथं जानासि ?

राजीवः – विश्वामित्रस्य कोपं द्रक्ष्यसि इति अगर्जत् सः ।

दीपकार्यः – हन्त ! किं नाटकं नाशयिष्यति सः ?

राजीवः – न जाने ।

दीपकार्यः – अस्तु, गच्छ त्वम् । भगवन् ! त्वमेव शरणम् । अधुना नाटकं भवतु तावत् । भो दर्शकाः ! अद्य वयं ग्रामवासिनः युष्मत्समक्षं हरिश्चन्द्रस्य नाटकम् उपस्थापयामः । त्रुटयः स्युः चेत्, क्षन्तव्याः । (यवनिका अपसारिता)

## अन्तिमं दृश्यम्

प्रतिहारः – महाप्रतापी, महादानी, क्षमाशीलः, सत्यवादी महाराजहरिश्चन्द्रः सभाम् आगच्छति ...

राजा – (प्रविश्य) नमः सूर्यदेवाय । महामन्त्रिन् !

मन्त्री – आज्ञापयतु देवः ।

राजा – अपि देशे सर्वं कुशलम् ?

मन्त्री – भवान् यदा साधूनां रक्षकः, देशे अमङ्गलं कुतः ? महाराज ! भवतः कृपया . . .

राजा – शृणोतु भवान् । अधुना अहं न भवतः राजा । राज्यं तु अन्यस्य . . .

मन्त्री – अस्य अर्थः ? अहं भवन्तं बोद्धुं न शक्नोमि ।

राजा – न बोधसि ? बोधयामि । ह्यः रात्रौ मया कोऽपि अद्भुतस्वप्नः दृष्टः ।

मन्त्री – कः स स्वप्नः ? कथयतु कृपया ।

राजा – ह्यः रात्रौ महर्षिविश्वामित्रः मां राज्यं प्रार्थयत मया च तस्मै तत् प्रदत्तम् । अधुना राज्यं न मम, अपि तु विश्वामित्रस्य ।

मन्त्री – किन्तु स्वप्ने कृतं दानं वास्तविकं न भवति । राज्यं भवत एव ।

राजा – मदर्थे स्वप्नः अपि सत्यः । अहं यत् स्वप्ने करोमि तत् जागरणे परिपूरयामि ।

प्रतिहारः – (प्रविश्य) जयतु देवः ! महर्षिविश्वामित्रः प्रतीक्षते द्वारदेशे ।

राजा – सादरं प्रवेशय तम् ।

मन्त्री—महाराज ! अद्य आगतः स विश्वामित्रः, मम तु भयं भवति । राज्यं न ददातु तस्मै । सावधानम् ! भवतः स्वप्नः सत्यः भवति !

प्रतिहारः—इत इतो भवान् ।

विश्वामित्रः—(प्रविश्य) साधूनां भक्षक हरिश्चन्द्र !

दीपकार्यः—(नेपथ्यतः) किं वदसि ? किं वदसि ?

विश्वामित्रः—न स्मरसि स्ववचनम् ? ह्यः रात्रौ मह्यं राज्यं दत्त्वा कथम् उपविशसि सिंहासने अद्य ? राज्यं मम । दानं देहि ।

राजा—आगच्छतु महर्षे ! राज्यं भवत एव । अद्यात्र सर्वान् साक्षीकृत्य, देवानां पुरतः अहं हरिश्चन्द्रः विश्वामित्राय स्वीयं राज्यं समर्पयामि ।

विश्वामित्रः—साधु, साधु हरिश्चन्द्र । पुनर् दानं देहि ।

दीपकार्यः—मूर्ख ! किं करोषि ? एतत् नाटके नास्ति ।

विश्वामित्रः—हरिश्चन्द्र ! दानं देहि । (राजा मुकुटम् उत्तरीयं च तस्य पादयोः स्थापयति ।) पुनरपि दानं देहि ।

दीपकार्यः—अरे नाटकं नाशयसि त्वम् !

राजा—(मन्दम्) देशिक ! किं करोषि ? सर्वे जना अस्मान् पश्यन्ति ।

विश्वामित्रः—अहं किमपि न श्रोष्यामि । दानं देहि ।

राजा—आम् महर्षे ! (आभूषणानि ददाति)

विश्वामित्रः—पुनर् दानं देहि ।

मन्त्री—(मन्दम्) पादत्रे ददातु । (राजा पादत्रे ददाति) महर्षे ! अधुना दानाय किमपि नास्ति ।

विश्वामित्रः—अस्ति, अवश्यम् अस्ति । यत् स्वकीयम्, यत् परकीयम्, सर्वं दानरूपेण देहि । (अधुना राज्ञः शरीरे केवलं धौतमेकम्) हरिश्चन्द्र ! न सह्यते विलम्बः ।

दीपकार्यः—देशिक ! स किं दास्यति अधुना ? चिन्तय किञ्चित् ? (सहसा राजा मुखात् कृत्रिमगुम्फं निष्कास्य विश्वामित्रस्य हस्ते दत्त्वा मञ्चात् पलायते । दीपकार्यः तत् दृष्ट्वा) यवनिका ! (इति अचेतनः पतति ।)

(गुम्फः—mustache.)

# शब्दजालम्

पात्राणि – रघुः (ग्राममुख्यः), सन्न्यासी, भक्तः। ग्रामपथः।

रघुः सन्न्यासी च परस्परम् आलपन्तौ आगच्छतः।

रघुः – आम् आम्, अहमेव अस्य ग्रामस्य मुख्यः प्रभुश्च। इमे ग्रामवासिनः ममैव आज्ञां पालयन्ति। अहम् एषां कर्ता, धर्ता नियन्ता च। दृश्यताम्, एतत् सुरम्यं भवनम् अहमेव रचितवान्। अहं स्वसंसारे परमसुखी। भवानपि आगच्छतु, मया सह सुखेन निवसतु।

सन्न्यासी – अहम् अहम् करोषि ! न जानासि तव इदं सुखं जले बुद्बुदसमानं क्षणिकम् ?

रघुः – क्षणिकम् ?

सन्न्यासी – आम् क्षणिकम्, मिथ्या।

रघुः – मिथ्या ?

सन्न्यासी – अयं संसारः मिथ्या, तव सुखं मिथ्या, त्वं मिथ्या, अहं मिथ्या, यत् किमपि पश्यसि तत् सर्वं मिथ्या !

रघुः – सर्वं मिथ्या ? किं वदति भवान् ? अहं भवता सह न एकमतः। किम् इयं भित्तिः मिथ्या ? इमे जना मिथ्या ? अयं हस्तः मिथ्या यस्मिन् रक्तं प्रवहति यं च अहं प्रत्यक्षं पश्यामि ?

सन्न्यासी—आम् सर्वमपि मिथ्या। इयं भित्तिः नाशशीला, इदं शरीरं मरणशीलम्, इमे जनाः अनित्याः, मृत्युवशगाः।

रघुः—आम्, सत्यं भवतः वचनम्, किन्तु अहं स्वसंसारे परमसुखी।

सन्न्यासी—परमसुखी ? अद्य सुखी, श्वः दुःखम् आपतेत् ! अपि त्वया जीवने कदापि दुःखं न अनुभूतम् ?

रघुः—आम्, बहुशः अनुभूतम्। अलं दुःखेन अधुना। अहं नित्यसुखं कामये। को जानीते श्वः किं भवेत् इति ? कृपया मां निर्दिशतु—किमहं करवाणि ?

सन्न्यासी—दुःखमयं जगदिदं मिथ्या। ब्रह्म एव सत्यम्। तदेव भजनीयम्, तेनैव सह एकीभवनीयम्।

रघुः—एकीभूतस्य मम किं भवेत् ? किमहम् अस्मात् दुःखमय-संसारात् मुक्तो भवितुं शक्नुयाम् ?

सन्न्यासी—आम्, तत्रैव परमं सुखम्, परमा शान्तिः, दुःख-कष्टेभ्यश्च मुक्तिः।

रघुः—तद् अहं कं मन्त्रं जपेयम् इति कृपया उपदिशतु।

सन्न्यासी—अहम् अहम् तु करोषि। तत्पूर्वं सः इति पदं योजय। सोऽहम्, सोऽहम्, सोऽहम् इति परमं मन्त्रं जप। (निष्क्रान्तः)

रघुः—सोऽहम्, सोऽहम्, सोऽहम्। अयं मन्त्र एव मां ब्रह्मणा सह एकीकरिष्यति। अहं ब्रह्मज्ञानं लप्स्ये। अत्रैव कृष्णफलके लिखानि, येन न विस्मरेयम्। (सः लिखति।

कृष्णफलके पूर्वम् अहम् इति लिखितम् आसीत् । तस्य अधस्तात् सोऽहम् इति लिखित्वा ध्यानमग्नः सन् जपति । अथ कश्चित् भक्तः गायन् आगच्छति ।)

भक्तः— (नेपथ्यतः गायन् प्रविशति) कृष्ण केशव कृष्ण केशव कृष्ण केशव रक्ष माम् । श्याम माधव श्याम माधव श्याम माधव पाहि माम् ।

रघुः—सोऽहम्, सोऽहम्, सोऽहम् ।

भक्तः—सोऽहम्, सोऽहमिति किं जपसि वत्स !

रघुः—कः मम जपे बाधां जनयति ? को भवान् ?

भक्तः—अहं भक्तः । संसारे तव वितृष्णा कुतः ?

रघुः—वितृष्णा ! आम् वितृष्णा । इदं सर्वमपि मिथ्या । संसारः मिथ्या, त्वं मिथ्या, अहं मिथ्या, सर्वं मिथ्या । अहम् अस्मिन् दुःखमये संसारे क्षणमपि जीवितुं न इच्छामि ।

भक्तः—यदि सर्वं मिथ्या तर्हि तव दुःखं कस्मात् ? कुत एतत् सर्वं मिथ्या इति वदसि ? भगवान् सत्यः, तस्य सृष्टिरपि सत्या । किं सोऽहम् इति जपेन ब्रह्मणा सह एकीभविष्यसि ?

रघुः—आम्, ब्रह्मणा सह एकीभविष्यामि ।

भक्तः—त्वं स्वयमेव स्ववचनं खण्डयसि ।

रघुः—खण्डयामि ? कथम् ?

भक्तः – त्वं सोऽहमिति जपसि, सः इति ब्रह्म, अहमिति त्वम् । एकत्वं भजसि, किन्तु अहमत्र द्वैधं पश्यामि ।

रघुः – तत् तु अहमपि वदामि । ब्रह्म सत्यम् । अपीदं तथ्यम् ?

भक्तः – आम् ?

रघुः – अहं मिथ्या । तेन सह एकीभूय अहं स्वकीयं मिथ्यारूपं नाशयिष्यामि । तदा द्वैधं कुत्र ? केवलम् एकमेव स्थास्यति । तदैव परमानन्दं प्राप्स्यामि ।

भक्तः – परमानन्दं प्राप्स्यसि ? ब्रह्मणि आनन्दः नास्ति । कुतस्त्वं निरानन्दं प्रति धावसि ? कुतः शुष्कः भवितुम् इच्छसि ?

रघुः – नहि, नहि, अहं शुष्कः भवितुं नेच्छामि ।

भक्तः – तर्हि भक्तिमार्गम् अनुसर । भक्तिरसं पिब ।

रघुः – भक्तिरसः ? कोऽसौ रसः ? कथयतु कृपया ।

भक्तः – भगवता सह मधुरसम्पर्कं एव भक्तिः । भगवन्तं भज । स करुणामयः, प्रेममयः, आनन्दमयः ।

रघुः – मधुरा एते शब्दाः !

भक्तः – न केवलं मधुरा अपि तु सत्याः । यदि त्वं तं भजसे तर्हि सर्वदा आनन्दलोके विहरिष्यसि । तस्य मधुरां सृष्टिं मधुरतरां विलोकयिष्यसि ।

रघुः – अपि एतत् सत्यम् ?

भक्तः – आम्, भगवान् सत्यः, तस्य सृष्टिरपि सत्या । यत् यत् पश्यसि तत् सर्वं सत्यम् ।

रघुः – किं वदति भवान् ?

भक्तः – विश्वासः न भवति ? अपि तव माता मिथ्या ?

रघुः – नहि, नहि । न मे माता मिथ्या ।

भक्तः – किं मातुः स्नेहः मिथ्या ? तस्याः प्रेममधुरवचनानि मिथ्या ?

रघुः – नहि, नहि, सर्वं सत्यम् ।

भक्तः – किं पृथिव्याः सर्वे मधुरसम्पर्का मिथ्या ?

रघुः – नहि, महाप्रमादः आसीत् । कृपया सन्मार्गम् उपदिशतु माम् ।

भक्तः – त्वं तु सोऽहम्, सोऽहम् इति जपसि । तत्पूर्वं केवलम् एकम् अक्षरं योजय – दा, दा सोऽहम्, दासोऽहम् । वत्स, वद मया सह । (द्वौ सह वदतः ।) अधुना त्वं भगवतः दासः । (भक्तः निष्क्रान्तः । रघुः कृष्णफलके सोऽहम् इत्यस्य अधस्तात् दासोऽहम् इति लिखित्वा ध्यानस्थः उपविशति ।)

रघुः – दासोऽहम्, दासोऽहम्, दासोऽहम्, दासोऽहम् ।

सन्न्यासी – (दूरात्) पश्येयम्, कथं युवसाधकः वर्तते इति ।

रघुः – (ध्यानस्थः) दासोऽहम्, दासोऽहम् . . .

सन्न्यासी – अरे किं जातं तव ! पुनः जन्म-व्याधि-जरा-मृत्यु-दुःखानि वरयसे । किं जपसि ?

रघुः – कः ? (नेत्रे उन्मील्य) पुनः भवान् आगतः मम मस्तिष्कं नाशयितुम् ! अलं ज्ञानेन ! अहम् अधुना ज्ञानमार्गं न

अनुसरामि । अहं भगवतः भक्तः, तस्य दासः । अहं परमानन्दम् आस्वादयितुम् इच्छामि । तत्रैव निमग्नः भविष्यामि ।

सन्न्यासी—मूढ, किं वदसि ? एकत्वं त्यक्त्वा दासत्वं भजसि ?

रघुः—न बोधामि किं सत्यमिति । भवान् किमपि वदति, भक्तः अन्यत् कथयति ।

सन्न्यासी—सर्वं मिथ्या, केवलं ब्रह्म एव सत्यम् ।

रघुः—किं मम माता मिथ्या, मातुः स्नेहः मिथ्या ?

सन्न्यासी—अनित्यमसुखं लोकमिमं प्राप्य भजस्व तत् । किं 'माता माता' वदसि ? न जानासि प्रसिद्धम् इदं वाक्यम् –'कस्ते तातः का ते माता ?' त्वं स्वयं नाशं गमिष्यसि । त्वया सह त्वदीया मधुरसम्पर्का अपि नष्टा भविष्यन्ति । यत् नश्वरं तत् असत्यमेव ।

रघुः—मम मस्तकं घूर्णते भवतः वचनं श्रुत्वा । विरमतु कृपया अधुना ।

सन्न्यासी—साधयामि तावत् । शृणु अन्तिमं वाक्यम् । तव शिरोव्यथापि मिथ्या । ब्रह्मणा सह एकत्वेन नित्यानन्दः, तद्वियोगेन व्यथा, यन्त्रणा, दुःखम्, कष्टम्, मृत्युः । तेन सह तादात्म्यमेव जीवस्य लक्ष्यम् । तत्रैव परमं सुखम् ।

रघुः—किं दासोऽहम् इति मन्त्रः मह्यं परमसुखं न दास्यति ?

सन्न्यासी—दासत्वेन पूर्णता न सम्भवति । एकत्वं विना न शान्तिः, न मुक्तिः, न ज्ञानम् ।

रघुः—दासभावः भक्तिमार्गस्य श्रेष्ठं तत्त्वम् । सोऽपि असत्यः सिद्धः !

सन्न्यासी—कथितम् एव मया । दासभावेन त्वं मनःप्राण-शरीरेषु बद्धः तिष्ठसि । अपि जानासि—कः त्वम् ? कुत आगतः ? मृत्योः परं कुत्र गमिष्यसि इति ? करालो मृत्युस्त्वामनुधावति अनवरतम् । जागृहि । मृत्यु-कवलितो मा भूयाः ।

रघुः—मृत्युः माम् अनुधावति ? एकवारं मृत्युग्रस्तः सन् स्वगतिम् अपि न ज्ञास्यामि । तदा कुत्र भगवान् तस्य परमानन्दो वा ? को नु माम् उद्धरेत् ? चिरकालं दुःखसागरे निमज्जेयम् । भवान् एव मम हिताकाङ्क्षी । किं करवाणि अधुना ?

सन्न्यासी—सोऽहमिति मन्त्रं जप ।

रघुः—तत् कथं सम्भवेत् ? अहं तु अधुना दासोऽहमिति मन्त्रं जपामि । स एव मम अभ्यस्तः । सोऽहमिति मन्त्रः पुरातनः जातः । नूतनः कोऽपि दीयताम् ।

सन्न्यासी—अस्तु, दासोऽहम् इति जपसि । तत्र नास्ति कापि हानिः । किन्तु तत्पूर्वम् एकम् अक्षरं योजय ।

रघुः—पुनः एकम् अक्षरम् ...

सन्न्यासी—आम्—स, स दासोऽहम्, सदा सोऽहम् । अनेन एव मुक्तिं प्राप्स्यसि । नान्यथा । सदा सोऽहम् । (निष्क्रान्तः)

रघुः – (कृष्णफलके दासोऽहमिति मन्त्रस्य नीचैः सदा सोऽहमिति लिखित्वा ध्यानाय उपविशति पुनः पुनः उच्चारयति च।) सदा सोऽहम्, सदा सोऽहम्, सदा सोऽहम्, सदा सोऽहम् ...

भक्तः – हरे राम हरे राम राम राम हरे हरे।
हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥
(प्रविश्य) पश्यामि नवभक्तः अधुना कथं वर्तते इति।

रघुः – सदा सोऽहम्, सदा सोऽहम्, सदा सोऽहम् ...

भक्तः – उत्तिष्ठ वत्स, उत्तिष्ठ भक्त ! किमेतत् जपसि अधुना ?

रघुः – को मां भक्त इति आह्वयति ?

भक्तः – भक्तस्त्वम्। भक्तिमार्गं त्यक्त्वा ज्ञानमार्गम् अनुसरसि ? आनन्दमार्गम् अनुसर। किं कामयसे ? यद् इच्छसि तद् भक्तिबलेन प्राप्तुम् अर्हसि। कथं परमं मन्त्रं त्यक्त्वा सदा सोऽहमिति मन्त्रं जपसि ?

रघुः – कुतः न ? अधुनापि अहं भवतः मन्त्रमेव जपामि। केवलम् आरम्भे सकार एव योजितः। का आपत्तिस्तत्र भवतः ?

भक्तः – आपत्तिः ? महती आपत्तिः। एकेन अक्षरेण त्वं मन्त्रबलं नाशयसि।

रघुः – कथं नाशयामि ? एकम् अक्षरं योजयित्वा अहं भगवतः स्मरणमेव करोमि।

भक्तः—कस्ते अधिकारः मन्त्रपरिवर्तने ?

रघुः—कुतो भवान् मुखं विकृतं करोति ? भक्तस्य क्रोधरूपं न शोभते ।

भक्तः—अस्तु, शृणु वत्स ! किम् अलभ्यं भक्तिबलेन ? किमिच्छसि ? वद ।

रघुः—संसारोऽयं दुःखमयः । दुःखपूर्णभवसागरे निमग्नोऽहं मुक्तिम् इच्छामि, सुखम् इच्छामि, परमानन्दम् इच्छामि। भक्तिमार्गः किम् एतत्सर्वं दातुं क्षमः ?

भक्तः—अवश्यं दातुं क्षमः । कुतोऽत्र संशयः ? हनूमान् किं किं नाकरोत् भक्तिबलेन ! स रामनामजपेन समुद्रमपि अलङ्घत । हनूमान् इव भव ।

रघुः—हनूमान् ? अपि शङ्कराचार्यः हनूमतः न श्रेयान् ? ज्ञानशिखरम् आरूढः स किं किं नाकरोत् ! हे शङ्कर, अनन्तः तव महिमा ।

भक्तः—महिमा शङ्कराचार्यस्य ! न स्मरसि तं प्रसङ्गं यदा मत्तगजः शङ्कराचार्यम् अन्वधावत् ?

रघुः—न जानामि । रुचिरः स्यात् । श्रावयतु कृपया ।

भक्तः—शङ्करः तं मत्तगजं दृष्ट्वा भयेन पलायितः ।

रघुः—शङ्करस्य भयम् ! विश्वासः न भवति ।

भक्तः—तवासौ शङ्कराचार्यः सर्वं माया इति वदति । पश्य,

ब्रह्मनिष्ठस्य तस्य मायातः पलायनम्, भयम् ! ब्रह्मणि भयं कुत्र ? तत्र नास्तीयं भीरुता, कापुरुषता ? अपि च, सर्वं माया, माया इति कथयित्वा स मातुः दाह-संस्कारं कर्तुम् अगच्छत् । तदा कुत्र आसीत् तस्य मायाबुद्धिः ? सर्वं माया चेत्, मातापि माया स्यात् । नैवं किम् ?

रघुः—आम्, भवतः वचनं बोधामि । जगत् सत्यम्, सर्वं सत्यम् । किन्तु अहम् आनन्दम् इच्छामि । वदतु किं कर्तव्यम् ?

भक्तः—पुनः दासोऽहमिति मन्त्रं जप ।

रघुः—पुनः तं जपितुं न शक्नोमि । अभ्यासः गतः ।

भक्तः—तर्हि भक्तिमार्गम् अनुसर्तुं न इच्छसि ? ज्ञानमार्गं न त्यजसि ?

रघुः—आम् आम्, ज्ञानमार्गं त्यक्तुम् इच्छामि किन्तु स मां न त्यजति । सदा सोऽहम् इति मन्त्रः मम अभ्यस्तः । तत्र बद्ध इव अहम् ।

भक्तः—तर्हि तत्पूर्वम् एकमेव अक्षरं योजय—दा, दा ...

रघुः—पुनः अन्यदेकम् अक्षरम् ! नहि । स गैरिकवस्त्रधारी आगत्य वदति 'सकारं योजय', भवान् वदति 'दकारं योजय' । मम शिरः घूर्णते ।

भक्तः—केवलम् एकमेव अक्षरं योजय—दा, दासदासोऽहम्, दासदासोऽहम् । त्वं हनूमान् भव, अर्जुनः भव, बलिः

भव, भगवतः श्रेष्ठः भक्तः भव, उत्तमः सेवकः भव । (निष्क्रान्तः । रघुः कृष्णफलके मन्त्रं लिखित्वा ध्यानाय उपविशति जपति च । सहसा–)

रघुः–नहि, नहि, तत्र मां गैरिकवस्त्रधारी ज्ञानी आह्वयति । (उच्चैः) आयामि, आयामि । अत्र च भक्तिप्रियभक्तस्य आह्वानं शृणोमि । (उच्चैः) आयामि, आयामि । (क्षणं चिन्तयित्वा) नहि–अलं खेलेन । घोरशब्दजाले पतितोऽस्मि । एकवारं सोऽहम्, ततः दासोऽहम्, अनन्तरं सदा सोऽहम्, तदनु दासदासोऽहम् । (जानुभ्यां भूमौ पतन्) हे परमानन्दस्वरूप भगवन्, पाहि माम्, पाहि माम् । अहं तुभ्यमेव आत्मानं समर्पयामि । एतद्वारे कोऽपि न बाधिष्यते माम् । त्वामेव शरणं प्रपद्ये । (ध्यानाय उपविश्य ओङ्कारं जपति । द्वयोः पार्श्वयोः सन्न्यासी भक्तः च आगत्य तं दृष्ट्वा अपगच्छतः ।)

# राजचन्दनः

पात्राणि – मलयः, कालिदासः, प्रतिहारः, भोजराजः, ज्ञानरञ्जनः, अनिन्द्यकर्मा, विद्याधरः, रसचन्द्रः, अमरसिंहः, ब्राह्मणः, त्रयः कवयः, भोलानाथः।

## प्रथमं दृश्यम्

(धारानगर्याः प्रान्तदेशीये कस्मिंश्चित् मार्गे द्वौ पथिकौ गच्छतः।)

मलयः – स्वामिन्! पश्यतु, अग्रे शुष्कं काष्ठखण्डम्। तद् दृष्ट्वा मम तु इदं स्फुरति – 'शुष्कं काष्ठं तिष्ठत्यग्रे'।

कालिदासः – नहि, एवं साधुतरं स्यात् – 'नीरसतरुरिह विलसति पुरतः'। अस्तु, अत्र क्षणं विश्रम्य अग्रे गमिष्यावः। अदूरे दृश्यते धारानगरी। तस्यां राजते महाज्ञानी, परमदयालुर्भोजराजः।

मलयः – आम्, तत्रैव स्थातुकामोऽहम्। श्रुतं मया यत् स पण्डितानाम् अतिशयम् आदरं करोति। भवदर्थं तदेव स्यात् समुचितं स्थानम्। तस्य राजसभाम् अलङ्कृत्य भवान् स्वस्य भोजराजस्य च कीर्तिं वर्धयिष्यति।

कालिदासः – कुत्र भोजराजस्य विदग्धपण्डितगणः, कुत्राहं सामान्यब्राह्मणः! तेन सह समागमेन अहमेव भाग्यवान्

कृतकृत्यश्च भवेयम् । सः अनन्तसागरश्चेत्, अहं जलबिन्दुरेव । तस्य ज्ञानिनः कीर्तिवर्धने कुत्र मम सामर्थ्यम् ?

मलयः—सर्वशास्त्रज्ञो भवान् । काव्यादिकमपि लिखति ।

कालिदासः—मादृशा बहवो ब्राह्मणाः सन्ति ये काव्यादिकं लिखन्ति शास्त्रनिपुणाश्च । जानासि भोजराजस्य सभा भारतविख्याता इति ? तस्य स्वकीयकाव्यप्रीतिरपि अतुलनीया । प्रतिदिनम् असङ्ख्यकवीनां काव्यं श्रुत्वा स योग्यकविभ्यः प्रचुरं पुरस्कारं ददाति । श्रेष्ठकवये स्वसभायां स्थानं दत्त्वा तस्य भरणपोषणादिकं सर्वमपि स्वीकरोति ।

मलयः—तदा आवयोः भाग्यम् उज्ज्वलम् । भवान् भोजराजस्य सभायां श्रेष्ठकवित्वेन स्थानं प्राप्स्यति अहं च भवतः अनुगतः सेवकः सन् राजसुखं भुञ्जानः कृतार्थः भविष्यामि ।

कालिदासः—मलय, त्वं खलु यशोलिप्सुः धनलोभी च । अहमत्र ज्ञानलाभाय आगतः । राजपण्डितेभ्यः किमपि शिक्षितुम् इच्छामि, न तु धनं यशो वा कामये ।

मलयः—अस्तु, अस्तु, आयातु त्वरितम् । शुभस्य शीघ्रम् ।

कालिदासः—मलय ! महाराजाय किं दद्याम्, कथं वा आत्मानं निवेदयेयम् ? को मम आत्मपरिचयः ?

मलयः—ज्ञानी अन्यस्मै यत् ददाति तदेव दास्यति भवान्—ज्ञानम् । तेन भवान् निर्धनो ब्राह्मण इति ज्ञात्वा राजा अवश्यं भवते आश्रयं दास्यति । भवतः कवित्वेन स प्रीतो भविष्यति ।

कालिदासः—मादृशानां हीनकवीनां तत्र स्थानं नास्ति मलय !

मलयः—भवान् हीनकविः कथम् ? अधुनापि स्मरामि तं प्रसङ्गं यदा कोऽपि दरिद्रब्राह्मणः ...

कालिदासः—अस्तु, तस्यां शिलायाम् उपविश्य सर्वं श्रावय ।

मलयः—यदा कोऽपि क्षुधापीडितः ब्राह्मणः अर्धश्लोकम् अलिखत् नृपाय स्वदशां निवेदयितुम्, तदा भवान् उत्तरार्धस्य पूरणे तस्य साहाय्यम् अकरोत् येन स राज्ञः सकाशात् पर्याप्तं पुरस्कारं प्राप्नोत् ।

कालिदासः—कस्य श्लोकस्य विषये प्रलपसि ?

मलयः—न स्मरति भवान् ? श्रावयामि तावत् । ब्राह्मणेन लिखितम् आसीत्—"भोजनं देहि राजेन्द्र घृतसूपसमन्वितम् ।" परं भवता योजितम्—"माहिषं च शरच्चन्द्रचन्द्रिकाधवलं दधि ।" स ब्राह्मणः भोजराजाय इमं श्रावयित्वा पर्याप्तं पुरस्कारं प्राप्नोत् । तस्मात् वदामि भवतः स्थानं राजसभायां सुरक्षितम् इति ।

कालिदासः—कदाचित् किमपि अलिखम्, तस्य बलेन कथयसि मम स्थानं सुरक्षितम् इति ? वृथा प्रलापं मा कुरु । पश्य, आगतं राजगृहम् । अधुना ...

मलयः – स्वामिन् ! चिन्तां मा करोतु । अहं महाराजाय सर्वं सम्यक् निवेदयिष्यामि ।

## द्वितीयं दृश्यम्

(राजसभा । सपण्डितः भोजराजः समासीनः ।)

प्रतिहारः – (प्रविश्य) जयतु महाराजः । द्वारदेशे कश्चित् ब्राह्मणः भवतः दर्शनप्रार्थी ।

भोजराजः – सादरं प्रवेशय ।

प्रतिहारः – यथाज्ञापयति देवः । (निष्क्रान्तः)

ज्ञानरञ्जनः – अस्तु महाराज ! अस्माकं शास्त्रचर्चा यथा प्रचलति स्म तस्याः उपसंहारत्वेन दुर्गाविषयकः अयं श्लोकः समीचीनः स्यात् ।

सिंहादुत्थाय कोपाद् ददडददडदड् धावमाना भवानी<br>
दैत्यानां दिव्यशस्त्रैस्ततडतडतडत् त्रोटयन्ती शिरांसि ।<br>
तेषां रक्तं पिबन्ती घुघुटघुटघुटप् प्रेरयन्ती पिशाचान्<br>
तृप्ता तृप्ता हसन्ती खखलखलखला शाम्भवी पातु नः सा ॥

राजा – उत्तमः श्लोकः ।

प्रतिहारः – इतं इतो भवान् ।

मलयः – विजयताम् अन्नदातः ! अहं कालिदासनामकस्य विद्वत्कवेः दासः । भवतः विदग्धपरिषदः ख्यातिं श्रुत्वा तस्याः सदस्यः भवितुं सुदूरदेशात् सोऽत्र सम्प्राप्तः । यदि भवान् आज्ञापयति, तमत्र आनयामि ।

राजा—इयं सभा तु पण्डितैः पूर्णा । अन्यस्य स्थानम् अत्र नास्ति ।

अनिन्द्यकर्मा—आम्, सत्यं सभा पूर्णा ।

विद्याधरः—सत्यमेव अत्र स्थानं नास्ति ।

राजा—तथापि पश्यामि । कोऽत्र भोः ? दुग्धपूरितं पात्रमेकम् आनय । (प्रतिहारः निष्क्रान्तः । मलयं प्रति) त्वं गत्वा स्वस्वामिनम् अत्र आनय । (मलयः निष्क्रान्तः)

रसचन्द्रः—राजन् ! दुग्धं नेच्छति कविवरः कालिदासः ।

अमरसिंहः—स तु सभायाः सदस्यो भवितुम् इच्छति ।

सर्वे—सदस्यो भवितुम् इच्छति ।

राजा—दुग्धप्रदानस्य तात्पर्यम् अचिरं बोधिष्यन्ति भवन्तः ।

कालिदासः—(प्रविश्य) विजयतां महाराजः ! भवतः पुण्यदर्शनेन आत्मानं कृतकृत्यं मन्ये ।

राजा—सभा मे पण्डितप्रवरैः पूर्णा । आमुखपूरितं दुग्धपात्रं स्वीकृत्य आत्मानं प्रसादयतु ।

कालिदासः—अनुगृहीतोऽस्मि राजन् ! (स्वगतम्) महाराजः विद्वान्, दयालुः परमज्ञानी च । स वृथा न दद्यात् दुग्धपात्रम् ।

विद्याधरः—(ज्ञानरञ्जनं प्रति) राजा दुग्धं किमर्थम् अददात् ?

कालिदासः—(स्वगतम्) अवश्यं स्याद् अत्र कोऽपि निगूढार्थः । (प्रकाशम्) मलय ! मह्यं किञ्चित् शर्करां देहि ।

ज्ञानरञ्जनः – शर्करा ? शर्करया किं भविष्यति ?

रसचन्द्रः – मन्ये, दुग्धे शर्करां मिश्रयित्वा अत्रैव पास्यति ।

अनिन्द्यकर्मा – तदेव प्रतीयते । (कालिदासः दुग्धे शर्करां मिश्रयति) किं महाराजः दुग्धं पास्यति ?

राजा – (तत् दृष्ट्वा आसनात् उत्थाय कालिदासम् उपगच्छन्) भवतः बुद्धिकौशलेन परमप्रीतोऽहम् । (स्वस्य निकटतमं ज्ञानरञ्जनस्य आसनं निर्दिशन्) अलङ्करोतु इदम् आसनम् ।

अमरसिंहः – किमेतत् महाराज ?

विद्याधरः – न बोधामः किमपि राजन् ! (अत्रान्तरे प्रतिहारः ज्ञानरञ्जनाय आसनम् आनयति ।)

ज्ञानरञ्जनः – किञ्चित्पूर्वमेव भवता कथितं यत् राजसभा पूर्णा इति । अधुना दुग्धपात्रस्य प्रदानेन यत् अभवत् तत्...

रसचन्द्रः – दुग्धप्रदानस्य शर्करामिश्रणस्य च रहस्यम् उद्घाटयतु कृपया ।

राजा – श्रूयतां तर्हि । आमुखपूर्णं दुग्धपात्रम् इति सभा पूर्णा । तत्र अन्यस्य प्रवेशः न सम्भवति ।

अमरसिंहः – समीचीनम् ।

राजा – तस्मात् आमुखपूरितं दुग्धपात्रं प्रदत्तम् । अधुना भवान् कालिदासः शर्करामिश्रणस्य तात्पर्यं बोधयतु ।

कालिदासः – शर्करामिश्रणस्य इदमेव तात्पर्यं यत् दुग्धे शर्करावत्

अहमपि राजसभायां सर्वथा लीनो भविष्यामि । राज्ञश्च तेन कष्टं नैव भविष्यति ।

राजा—न केवलं स लीनो भविष्यति अपि तु शर्करावत् सभायाः माधुर्यमपि वर्धयिष्यति । विनयात् नावदत् स एतत् । अपूर्वं खलु इदम् उत्तरम् । (स्वकण्ठात् रत्नमालां निष्कास्य कालिदासस्य कण्ठे परिधापयति )

कालिदासः—उपकृतोऽस्मि राजन् !

राजा—अद्यप्रभृति भवान् मे सभाम् अलङ्करिष्यति । आयातु अधुना । (मलयसहितेन कालिदासेन सह निष्क्रान्तः)

रसचन्द्रः—कोऽयम् आगतः ? बुद्धिमान् इव दृश्यते । राज्ञः रत्नमालां प्राप्नोत् अद्य ।

ज्ञानरञ्जनः—न केवलं बुद्धिमान् रसचन्द्र ! भयङ्करः । प्रथमदिने एव राज्ञः प्रीतिभाजनम् अभवत् ! दृष्टमेव त्वया यत् राजा अद्य ममासने उपवेशनाय आदिशत् तम् ।

विद्याधरः—नैतत् शोभनम् अस्माकम् ।

अमरसिंहः—द्रक्ष्यामः तस्य बुद्धिकौशलम् ।

अनिन्द्यकर्मा—एत अधुना ।

रसचन्द्रः—अस्माभिः सावधानैः भाव्यम् ।

## तृतीयं दृश्यम्

प्रतिहारः—(प्रविशन्तं ब्राह्मणं प्रति) कुत्र गन्तुकामः ?

ब्राह्मणः—महाराजं द्रष्टुं गच्छामि ।

प्रतिहारः – सभाकक्षे कोऽपि नास्ति अधुना ।

ब्राह्मणः – तथापि यदि अनुमतिः स्यात्, तत्रैव प्रतीक्षां कुर्याम् ।

प्रतिहारः – अस्तु, प्रविश ।

ब्राह्मणः – (प्रविश्य, सर्वत्र विलोक्य, भूमौ उपविशन्) हा दैव ! कथं निर्दयं त्वम् ? यदि पृथिव्यां जन्म ददासि तर्हि जीवनधारणार्थं व्यवस्थां न करोषि कथम् ? यस्य जन्म भवति स तु जीवेत् । यदि त्वं भोजनमेव न ददासि तर्हि तु इहलोकस्य कार्यम् असमाप्य एव परलोकप्राप्तिः भवेत् । पश्य, अद्य उदरार्थम् एव आगतोऽहं भोजराजं धनं याचितुम् । रिक्तहस्तः कथं गच्छेयम् इति मया कादलानि आनीतानि । न जाने राजा किं कथयेत् । मम पादौ व्यथेते । अत्रैव विश्राम्यामि तावत् । (इति भूमौ स्वपिति)

रसचन्द्रः – (पण्डितैः सह अन्यद्वारेण प्रविशन्) दिनानुदिनं कालिदासस्य गौरवं वर्धते वयं च राजसम्मुखे अपमानिताः भवामः ।

ज्ञानरञ्जनः – यतिवारं तं धर्तुं चेष्टामहे ततिवारं बुद्धिकौशलेन कथमपि स्खलति सः ।

रसचन्द्रः – कोऽयं दरिद्रब्राह्मणः ?

विद्याधरः – कथं सभामध्ये एवं स्वपिति !

ज्ञानरञ्जनः – शिष्टाचारमपि न जानाति ।

अमरसिंहः – कथं मलिनः दृश्यते ! मन्ये बहुदूरात् आगतः ।

अनिन्द्यकर्मा – यदि महाराजं द्रष्टुम् आगतः तर्हि अशोभनं तत् अस्माकम् ।

ज्ञान. – आम् अनिन्द्यकर्मन् ! महाराजः दयालुः । यः यत् प्रार्थयते स तत् ददाति । यतः सः अस्मान् पालयति, पोषयति तस्माद् वयं यत् याचामहे, तत् नैव ददाति ।

रस. – साधूक्तं त्वया ज्ञान ! इमं ब्राह्मणं यदि नृपसम्मुखे अपमानितं कुर्मः तर्हि स लज्जया पलायिष्यते । पश्यत, पश्यत तस्य पोटलीम् ।

विद्या. – अवश्यं नृपाय किमपि आनीतं स्यात् ।

अमरः – उद्घाटयाम । (उद्घाट्य) कादलानि !

अनिन्द्य. – चोरयाम । बहिः काष्ठखण्डानि सन्ति । कादलानां स्थाने काष्ठखण्डानि स्थापयाम । (तथा करोति)

विद्या. – तव नाम अनिन्द्यकर्मा । त्वं चोरयसि कथम् ?

अनिन्द्य. – तूष्णीं तिष्ठ विद्याधर ! (कादलस्थाने काष्ठखण्डानि स्थापयति)

ज्ञान. – अरे द्वारे स कालिदासः अभ्यन्तरं दृष्ट्वैव अगच्छत् ।

विद्या. – अस्मान् अपश्यत् किम् ? चलत, चलत, भोजराजस्य आगमनसमयः भवति ।

उद्घोषणा – महादानी, परमदयालुः, ज्ञानी, वीरः, लोकनाथः भोजराजः प्रविशति ...

भोजः – आस्यताम् । अद्य शिरोव्यथाकारणात् शीघ्रमेव प्रतियास्यामि ।

ब्राह्मणः – (सुप्तोत्थितः) क्षम्यताम् । अत्र सुप्तः आसम् । जयतु महाराजः । इदं भवते आनीतम् । (पोटलीम् उद्घाट्य, काष्ठखण्डानि दृष्ट्वा चकितः)

भोजः – किं मह्यं काष्ठम् उपहरसि ? दरिद्रोऽपि बुद्धिहीनः किम् ?

अमरः – कथं काष्ठं ददाति !

ज्ञान. – अयं महाराजस्य अपमानः ।

भोजः – काष्ठं विहाय अन्यत् किमपि न प्राप्तम् ? अपेहि इतः ।

ब्राह्मणः – किन्तु महाराज ! मया ...

भोजः – पुनः किन्तु इति किम् ? अपेहि ।

रस. – अपेहि ।

कालिदासः – महाराज ! किं करोति भवान् ? अयं महाज्ञानी पण्डितश्च । तस्मात् ...

रस. – कथमयं पण्डितः ?

ज्ञान. – यतो हि महाराजाय काष्ठम् उपहरति ।

कालिदासः – अस्मात् श्रेयान् उपहारः न वर्तते महाराज ! यतो हि –

दग्धं खाण्डवमर्जुनेन बलिना रम्यद्रुमैर्भूषितं
दग्धा वायुसुतेन हेमनगरी लङ्का पुनः स्वर्णभूः ।
दग्धो लोकसुखो हरेण मदनः किं तेन युक्तं कृतं
दारिद्र्यं जनतापकारकमिदं केनापि दग्धं नहि ॥

भोजः – साधु, साधु कालिदास ! उत्तमोऽयं श्लोकः । अधुना सर्वेषाम् उपभोगाय श्लोकस्यार्थं कथयतु ।

कालिदासः – अस्य श्लोकस्य अयमेव अर्थः यत् पुरा अर्जुनः रमणीयं खाण्डववनम् अज्वालयत् । वायुपुत्रः हनूमान् स्वर्णमयीं लङ्कापुरीम् अदहत् । शिवेन कामदेवः दग्धः । किन्तु जनदुःखदायकं दारिद्रयं केनापि न दग्धम् । तस्य काष्ठरूपं दारिद्रयं ज्वालयतु भवान् ।

भोजः – भवतः व्याख्या अद्भुता । कोऽत्र भोः ? अस्य दारिद्रय-काष्ठं ज्वालय । अस्मै दशसहस्रस्वर्णमुद्राः प्रदेयाः ।

सर्वे – दशसहस्रस्वर्णमुद्राः ?

रस. – अहं न मन्ये अयं तावत् आशास्ते इति ।

भोजः – कालिदास ! यदि भवता काष्ठोपहारस्य मूल्यं न कथितं स्यात् तर्हि पण्डितः इतः अपमानितः अगमिष्यत् । आगम्यतां ब्राह्मणदेव ! स्वीकरोतु इदं पारितोषिकम् ।

ब्राह्मणः – चिरोपकृतोऽस्मि । (गृहीत्वा निष्क्रमणकाले पुनः पुनः घूर्णित्वा भयेन पृष्ठं पश्यति ।)

ज्ञान. – एवं किं पश्यसि ?

भोजः – कालिदास ! कुतः स एवं पश्यति ?

कालिदासः – महाराज ! यदि कोऽपि तस्य दारिद्रयं हरति तत् पुनः तम् अनुसरति । तस्मात् स पुनः-पुनः पृष्ठं पश्यति । भवता तु तस्य दारिद्रयं दग्धम् । अनुसरणस्य प्रश्नो वा कुत्र ?

भोजः—(मस्तके हस्तं दत्त्वा) अलम्, साधयामि अधुना ।

ज्ञान.—महाराज ! अपि शिरोव्यथा वृद्धिं गता ?

भोजः—एतु कालिदास ! (निष्क्रान्तौ)

रस.—पश्यसि ज्ञानरञ्जन ! त्वं पृच्छसि—महाराज, अपि शिरोव्यथा वृद्धिं गता ? महाराजः तस्य उत्तरम् अदत्त्वा वदति—एतु कालिदास !

ज्ञान.—मन्ये स कालिदासः राज्ञः विषयें तावत् न चिन्तयेत् अपि । राजा तु सदा कालिदासः, कालिदासः इति रटति ।

अमरः—आः स कालिदासः अद्य सर्वम् अनाशयत् ।

रस.—स ब्राह्मणः सर्वथा मूर्खं एव ।

ज्ञान.—कालिदासश्च तस्य कृते कं कम् अर्थं न अकरोत् !

रस.—सर्वदा स एव प्रशंसापात्रम् । महाराजेन कथितम् अद्भुता व्याख्या इति । तत्र का अद्भुतता आसीत् ?

अनिन्द्य.—ज्वलामि, ज्वलामि अद्य ।

ज्ञान.—अमरसिंह ! तव किमपि न भवति ?

अमरः—अहमपि ज्वलामि ।

विद्या.—आम्, किमपि कर्तव्यम् ।

ज्ञान.—सर्वदा वदामः किमपि कर्तव्यम् इति । किन्तु किमपि न भवति । एत । कालिदास ! अस्मिन् वारे ज्ञानस्य हस्तात् स्खलितुं न शक्ष्यसि । ज्ञानरञ्जनः त्वां स्वज्ञानेन रञ्जयिष्यति ।

## चतुर्थं दृश्यम्

रसं.—अरे विद्याधर ! जानासि राजा कं नूतनं नियमम् अकरोत् ?

अमरः—स कथं जानीयात् ? स तु सप्ताहात् ग्रामं गतः आसीत् ।

विद्या.—कथय, अस्ति कोऽपि विशेषः ?

अमरः—राजा असूचयत्, यः कोऽपि सभाम् आगत्य, नूतनश्लोकं श्रावयित्वा दशसहस्रस्वर्णमुद्राः प्राप्तुम् अर्हति इति ।

विद्या.—तर्हि तु बहवो जनाः पुरस्कारं प्राप्नुयुः ?

ज्ञान.—अरे नहि ।

अनिन्द्य.—न जानासि अस्माकं रसचन्द्रः ज्ञानरञ्जनश्च श्रुतधरौ इति ? तौ यत् सकृत् शृणुतः तत् अविकलं श्रावयितुं शक्नुतः ।

अमरः—आवां द्विःश्रुतधरौ ।

अनिन्द्य.—अद्य यावत् यः कोऽपि यमपि श्लोकम् अश्रावयत् सः अस्माभिः प्रतिश्रावितः । तस्मात् राजा अस्माकं प्रशंसां करोति कवयश्च पुरस्कारं न प्राप्नुवन्ति ।

विद्या.—रुचिरमेतत् । अचिरमेव देशान्तरेषु अस्माकं ख्यातिः प्रसरिष्यति यत् वयं सर्वज्ञा इति ।

रस.—मन्ये प्रसृता अपि ।

विद्या.—यः कोऽपि यमपि श्लोकं श्रावयति वयं तं जानीमः इति कथयामः ।

ज्ञान. – विद्याधर ! यदि परीक्षितुम् इच्छसि, स्वयं श्लोकमेकं रचयित्वा अस्माकं बुद्धिकौशलं पश्य ।

विद्या. – त्यज, अचिरमेव कवयः आगमिष्यन्ति, तदा श्रोष्यामि । अस्तु, वद, कालिदासस्य का वार्ता ?

रस. – कालिदासः ? सोऽपि सप्ताहात् सभां न आयाति । भगवान् तथा कुर्यात् यथा स पुनः कदापि न आगच्छेत् । तदा तस्य मङ्गलम्, अस्माकमपि मङ्गलम् ।

विद्या. – शान्तम् ! राजा प्रविशति ।

उद्घोषणा – महादानी, परमदयालुः, ज्ञानी, वीरः, लोकनाथः भोजराजः प्रविशति ...

भोजः – (प्रविश्य) आस्यताम् । प्रतिहार ! अप्यस्ति कश्चित् विद्वान् द्वारदेशे ?

प्रतिहारः – आम् देव ! सन्ति त्रयः कवयः ये स्वलिखितश्लोकान् श्रावयितुम् इच्छन्ति ।

भोजः – सादरं प्रवेशय तान् ।

प्रतिहारः – तथा । (निष्क्रान्तः)

रस. – महाराज ! कालिदासस्य का वार्ता ?

भोजः – न जाने ।

ज्ञान. – कीदृग् विचित्रोऽयं जनः ? राज्ञेऽपि समाचारं न प्रेषयति !

प्रतिहारः – इत इतो भवन्तः ।

प्रथमकविः – शमात्मने । प्रणमामः महाराजम् ।

भोजः—शमात्मने। श्लोकान् श्रावयितुम् आगता यूयम् ?
अवहितोऽस्मि।

प्रथमकविः—यथाज्ञापयति भवान्।

कविः करोति काव्यानि रसं जानाति पण्डितः।
तरुः सृजति पुष्पाणि मरुद् वहति सौरभम्॥

भोजः—साधु। श्लोकः नूतनः प्रतीयते। तथापि मम पण्डिताः
प्रष्टव्याः। अपि जानाति युष्मासु कोऽपि इमं श्लोकम् ?

रस.—जानामि देव! यदि आज्ञा स्यात् श्रावयेयम्।

भोजः—श्राव्यताम्। (रसचन्द्रः श्रावयति)

प्रथमकविः—किन्तु मया अद्यैव रचितोऽयं श्लोकः!

विद्या.—कथं शक्यं कविवर? अधुना यदि महाराजः आदिशति,
द्वितीयकविः श्रावयतु।

भोजः—आम्, श्रावयतु।

प्रथमकविः—महाराज! गृहे किमपि नासीत्। तस्मात् श्लोकं
लिखित्वा आगतः अत्र।

भोजः—तिष्ठ तत्र, द्रक्ष्यामः परम्। भवान् श्रावयतु कृपया।

द्वितीयकविः—देहि देहि सदा देहि दाता याता दिवो दिवम्।
तस्य सत्सम्पदः सर्वास्तस्य शाश्वतिकं शिवम्॥

ज्ञान.—महाराज! श्रावयेयं किम्? (श्रावयति)

अनिन्द्य.—वयमपि जानीमः। (श्रावयति)

भोजः—अयमपि सर्वैः ज्ञायते। अस्तु, तृतीयस्य शृण्मः।

तृतीयकविः—यथाज्ञापयति भवान् । मया अयं श्लोकः अद्य प्रभाते रचितः ।

हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥

(रसचन्द्रः तं प्रतिश्रावयति । तदनु अर्धं श्रावयति अमरसिंहः अर्धं च अनिन्द्यकर्मा । अत्रान्तरे कश्चित् वृद्धः सभां प्रविश्य कोणे तिष्ठति ।)

भोजः—किं नास्ति अत्र कोऽपि यो मां नूतनश्लोकं श्रावयेत् ?

रस.—कोऽपि नास्ति महाराज ! अस्माकं ज्ञानरञ्जनः श्रावयिष्यति अधुना ।

ज्ञान.—आम् महाराज !

वृद्धः—अहं नूतनश्लोकं श्रावयिष्यामि महाराज !

रस.—कोऽयम् ? कुत आगतः ?

वृद्धः—मन्ये, मम श्लोकः कठिनो भवेत् । अतः पूर्वमेव तस्य अर्थं कथयामि । महाराजस्य पूर्वजः मम पूर्वजात् धनं गृहीत्वा इमं प्रासादम् अरचयत् !

ज्ञान.—किं प्रजल्पति अयम् ?

वृद्धः—अधुना दयालुः महाराजः मह्यं तं प्रासादं दातुम् अर्हति ।

मद्वंशस्य धनार्धेन पुरा त्वत्पूर्वजो महान् ।
इमं चकार प्रासादं तं मे दातुं त्वमर्हसि ॥

रस.—(अनिन्द्यस्य निकटे) विचित्रा स्थितिः ! यदि वदामः जानीमः इति, नृपेण स्वप्रासादः त्यक्तव्यः ।

अनिन्द्य.—यदि वदामः न जानीमः इति तर्हि स प्राप्स्यति दशसहस्रं स्वर्णमुद्राः ।

अमरः—वरं स्यात् वदामः न जानीमः इति ।

रस.—राजन् ! अयं श्लोकः अस्मदर्थे नूतन एव ।

ज्ञान.—अहमपि न जाने महाराज ! तस्मै पुरस्कारं ददातु ।

भोजः—कविवर ! को भवान् ?

वृद्धः—(छद्मवेशम् अपाकुर्वन्) देव, कालिदासोऽहम् ।

अमरः—कालिदासः ? (मस्तके ताडयति)

कालिदासः—एते पण्डिताः भवन्तं छलयन्ति । इमे श्रुतधराः । यः यं श्लोकं वदति, तत्कालमेव ते तं स्मरन्ति । तस्मात् सर्वथा नूतनश्लोकोऽपि पुरातनः प्रतीयते ।

भोजः—साधु पण्डितवर ! भवतः कथनेन एतेषां कापट्यं धृतम् । एत कवयः । स्वीकुरुत पारितोषिकम् । (राजा तेभ्यः ददाति)

प्रथमकविः—अनुगृहीतोऽस्मि ।

द्वितीयः—उपकृतोऽस्मि ।

तृतीयः—कृतकृत्योऽस्मि ।

सर्वे—आयुष्मान् भवतु महाराजः ।

भोजः—धन्याः स्मः । (कवयः निष्क्रान्ताः) एतु कालिदास ! स्वयं यं पुरस्कारम् इच्छसि तमेव दास्यामि । (निष्क्रान्तौ)

ज्ञान.—यं पुरस्कारम् इच्छसि तमेव दास्यामि । अन्याय्यम्, सर्वथा अन्याय्यम् इदम् ।

अमरः—तूष्णीं स्थातुं नैव शक्नोमि ।

रस.—एतादृशम् अपमानं न सहिष्यामहे ।

विद्या.—प्रतिवारं स्खलति सः ।

अनिन्द्य.—एकदा सुयोगं लब्ध्वा दास्यामि तस्मै पर्याप्तम् ।

ज्ञान.—एत, चिन्तयामः अस्य प्रतिकारम् । (सर्वे निष्क्रान्ताः)

रस.—अरे कालिदास ! द्रक्ष्यसि, द्रक्ष्यसि मम बुद्धिकौशलम् । अधुना न भविष्यसि कालिदासः अपि तु रसदासः, आम् रसदासः । (निष्क्रान्तः)

## पञ्चमं दृश्यम्

(स्थूलकायः ब्राह्मणः भोलानाथः प्रविशति)

भोलानाथः—अरे भोला ! कुतस्त्वं पृथिवीम् आगतः ? मूर्खस्य तव न बलं न च बुद्धिः न वा विद्या । आः घर्मः ! उदरे तापः, मस्तके तापः, सर्वत्र प्रचण्डतापः । तापो वै जगत् । यावत् इदं चिक्कणम्, खल्वाटं मस्तकं तापेन न स्फुटति तावत् गत्वा शीतलच्छायां सेवे । रे भोला ! शरीरे विभूतिं लिप्त्वा त्वं तु सर्वान् अहं दरिद्र इति दर्शयसि । एतत् तव प्रदर्शनमेव । भगवान् अपि छलयति इति मया अधुनैव ज्ञातम् । अरे भगवन् भोलानाथ ! त्वम् इमं भोलानाथं मूर्खयितुं न

शक्नोषि । एषोऽहं तव गुरोरपि गुरुः । कथं त्वं दरिद्रः यदि तव गृहे अन्नपूर्णा पार्वती वर्तते ? अरे भोला ! किञ्चित् भोजनं देहि । (ध्यायति) न दास्यसि ? अस्तु, तव पुत्रं लम्बोदरं प्रार्थये । हे गणेश विनायक गजानन लम्बोदर ! पश्य, आवयोः कियत् सादृश्यम् ! तव पितुः नाम भोलानाथः, मम पुत्रस्य पितुः नामापि भोलानाथः । त्वं लम्बोदरः, ममापि लम्बोदरं वर्तते । त्वम् अतीव ज्ञानी, अहमपि प्रायस्तथैव । केवलम् एकत्रैव विषमता । त्वं खादसि लड्डुकान्, अहं पिबामि वायुम् । कांश्चित् लड्डुकान् देहि मह्यम् । परं त्वम् अहम् अहं च त्वम् । किं दास्यसि मह्यम् ? (ध्यायति) यथा पिता तथैव पुत्रः । हे अन्नपूर्णे ! (अत्रान्तरे अमरसिंहः ज्ञानरञ्जनश्च तं मूर्खं ज्ञात्वा परस्परं किमपि वदतः । भोलानाथः तौ अदृष्ट्वैव स्वप्रार्थनायां मग्नः ।) प्रभुः भोलानाथः पुत्रः लम्बोदरश्च कृपणौ । त्वं परम-दयालुः । अहमत्र नेत्रे संवृत्य पञ्चवारं तव नाम स्मरामि । तदनन्तरं त्वं मह्यं वरं देहि । (यावत् सः अन्नपूर्णे इति पञ्चवारं जपति तावत् अमरसिंहः वृक्षम् आरोहति ।)

अमरः – (वृक्षात्) रे ब्राह्मण ! अहं भोलानाथः शिवः । यदि मङ्गलम् इच्छसि, यदि धनम् इच्छसि तर्हि सावधानं शृणु । मस्तकं नीचैः कुरु, नेत्रे निमीलय । भोजराजस्य

सभायां ज्ञानरञ्जनः नाम कश्चित् प्रसिद्धः विद्वान् वर्तते । स मम परमो भक्तः । सः अचिरमेव अत्र आगमिष्यति । तस्य वचनं शृणु, धनवान् भविष्यसि । नोचेत् मृत्युः सुनिश्चितः । त्वम् अधुनापि न प्रस्तुतः मम दर्शनार्थम् । दशवारं मम नाम स्मर, तत्परं नेत्रे उन्मीलय ।

भोला – भोलानाथ ! (यावत् दशवारं भोलानाथ इति वदति तावत् अमरसिंहः वृक्षात् अवतरति ज्ञानरञ्जनश्च भोलानाथस्य पृष्ठतः तिष्ठति ।) दशवारं तु जातम् । कोऽपि तु न दृश्यते ।

ज्ञान. – शिवमस्तु भो ब्राह्मण !

भोला – क ... क ... को भवान् ?

ज्ञान. – नात्र भेतव्यम् । अहं ज्ञानरञ्जनः । भोजराजस्य सभायां विदग्धपण्डितेषु एकतमः ।

भोला – (साष्टाङ्गं प्रणमन्) रक्षतु माम् ।

ज्ञान. – उत्तिष्ठ ब्राह्मणदेव ! स भोलानाथः शिव एव रक्षिष्यति त्वाम् । तव दारिद्र्यस्य अपहरणाय स माम् अत्र प्रैषयत् । सन्तुष्टः सः तुभ्यं धनमपि अददात् । (इति ददाति) एतत् आरम्भमात्रम् । परम् अधिकं प्राप्स्यसि । सन्न्यासिरूपेण अत्र उपविश्य तस्य नाम-स्मरणं कुर्याः इति श्रीश्रीभोलानाथस्य आज्ञा । अपि च स्मर इदम् – केनापि सह न वद, बोधसि, केनापि

सह नहि । अधुना त्वं कालिदासस्य गुरुः । अत्रान्तरे यदि राजा त्वां राजसभायां निमन्त्रयेत् तर्हि विना विलम्बं गच्छ । स्मर, शिवः सर्वं पश्यति । अधुना शीघ्रं ध्यानमग्नो भव । तस्यैव नामजपं कुरु । (सः ध्यानस्थः तथा करोति ।)

अमरः—(प्रविश्य, खेलतः बालान् आह्वयति) शृणुत रे बालाः ! अत्रैव सम्पूर्णदिनं 'कालिदासस्य गुरोः जयः, कालिदासस्य गुरोः जयः' इति वदत । कुत्रापि मा गच्छत । यदि एतत् कार्यं सम्यक् कुरुथ, अनेकाः मिष्टिकाः लड्डुकान् च प्राप्स्यथ । (बालाः जयगानं कुर्वन्ति ।)

## षष्ठं दृश्यम्

### (राजसभा)

भोजः—शं सभासद्भ्यः । पण्डितवर रसचन्द्र ! नगरस्य कः समाचारः ?

रस.—भवत्कृपया सर्वमपि कुशलं महाराज ! अद्यतनं दिनम् अतीव मङ्गलं राजन् ! श्रूयते कालिदासस्य गुरुः महर्षि-श्रीभोलानाथः भवतो नगरम् अलङ्करोति इति ।

भोजः—अपि एतत् सत्यम् अनिन्द्यकर्मन् ?

अनिन्द्य.—श्रूयते । सत्यं न वेति निश्चितं न जाने ।

भोजः—आश्चर्यम् ! कालिदासः कुत्र ? अधुनापि नागतः !

ज्ञान.—नैतत् नूतनं महाराज ! महामान्य-कालिदासस्तु सर्वदैव विलम्बितः । मन्ये सोऽद्य स्वगुरोः श्रीभोलानाथस्य दर्शनार्थं गतः ।

कालिदासः—(प्रविश्य) प्रणतोऽस्मि राजन् !

भोजः—दीर्घायुर्भव । वयं त्वद्विषये एव चर्चयामः । श्रूयते तव श्रीगुरुः धारानगरीं सम्प्राप्तः इति ?

कालिदासः—असम्भवं देव ! मम गुरुः महर्षिश्रीकालिचन्द्रः वने सदा तपस्यामग्नः । तस्यात्र आगमनम् असम्भवम् ।

विद्याधरः—महाराज ! कालिदासः आत्माभिमानेन तथा अन्धः यथा स्वगुरुं श्रीभोलानाथमपि स्वीकर्तुं न इच्छति ।

अमरः—सत्यं वदति विद्याधरः । कालिदास ! नैतद् उचितम् । गुरुनिन्दा आत्मप्रशंसा च मृत्युसमे ।

ज्ञान.—प्रसीदतु महाराजः । अत्र कालिदासस्य श्रीगुरोः पदार्पणेन वयम् अनुगृहीता भवेम ।

भोजः—कविवर ! सङ्कोचः न कर्तव्यः ।

कालिदासः—राजन् ! न बोधामि किमपि ।

भोजः—त्वं न तथा मूढः । गच्छ, स्वगुरुं सादरम् आनय । सभासद्वर्गः प्रसन्नः भवेत् ।

कालिदासः—यथाज्ञापयति महाराजः । (निष्क्रान्तः)

रस.—राजन् ! अहमपि गच्छेयं किम् ? मन्ये कालिदासः शठतां कुर्यात् ।

सर्वे – आम् आम्, शठतां कुर्यात् ।

ज्ञान. – कः जानाति – आत्मगौरवेण अन्धः स स्वगुरुं श्रीभोलानाथमपि विद्रावयेत् नगरात् ।

अमरः – कालिदासस्तु वञ्चने प्रसिद्धः ।

भोजः – अलम् अपभाषणेन । कालिदासे मम अखण्डविश्वासः ।

रस. – किन्तु राजन् ! यः गुरुः स्वशिष्याय सर्वमपि अददात्, यस्य कृपया कालिदासः श्रेष्ठकविः अभवत्, तस्य अनादरम् अपमानञ्च कथं कर्तुं शक्नोति सः ?

अमरः – आम् आम्, कालिदासः कथमपि स्वगुरुं स्वीकर्तुं न इच्छति ।

अनिन्द्य. – मम गुरुः पृथिव्याः कस्मिंश्चित् कोणे निवसति । जनानां दृष्टौ स क्षुद्रः, किन्तु मदर्थे स साक्षाद् ईश्वरः ।

विद्या. – आम्, गुरुर्ब्रह्मा गुरुर्विष्णुर् गुरुर्देवो महेश्वरः ।
गुरुः साक्षात् परब्रह्म तस्मै श्रीगुरवे नमः ॥

ज्ञान. – कविवरः श्रीकालिदासः स्वगुरुं निन्दति इति दुःखदं खेदकरं च वृत्तम् । ('कालिदासस्य गुरोः जयः' इति वारंवारं श्रूयते नेपथ्यात् ।)

अनिन्द्य. – कालिदासः सगुरुः आगच्छति राजन् !

भोजः – सत्यः खलु मम विश्वासः । अभिवादनाय सज्जा भवाम । प्रतिहार ! पाद्यम् अर्घ्यं च आनय ।

कालिदासः – (प्रविश्य) प्रणताः स्मः ।

भोजः – शं कालिदासगुरवे । भवतः पवित्रपादस्पर्शेन कृतार्था

वयम् । किं भोः कालिदास ? कुतः मूकमूढवत् आचरति ते गुरुः ?

कालिदासः – (सविनयम्) नाहं गुरोः अपमानं सोढुं शक्नोमि । न स मूढः । स मम गुरुदेवः । मौनव्रतधारी स सङ्केतेन इदमेव वदति यत् 'वटवृक्ष एव मदर्थे श्रेयान् न तु चाकचक्यमयी राजसभा' । स नैव मूकः । भवान् तु जानाति एव – सर्वार्थसाधनं मौनं मुनीनां लक्षणं मतम् ।

भोजः – क्षम्यतां गुरुदेव ! स्वल्पातिथ्यं स्वीकरोतु । (राजा उपवेशनाय सिंहासनं दर्शयति । भोलानाथः सहसा भूमौ उपविशति ।) गुरुदेव ! एतत् किं कालिदास ?

कालिदासः – सिंहासनं प्रति गुरोः अनासक्ति सूचयति इदम् । गुरुदेव ! सिंहासने उपविशतु । (भोलानाथः उपविशति)

भोजः – अपि महर्षिवरस्य सर्वं कुशलम् ?

भोला – मस्तकव्यथा । (सर्वे हसन्ति ।)

कालिदासः – अस्यां सभायां बहवः सन्ति ये कापट्यं छलनां च कुर्वन्ति । मम गुरुदेवः तत् सर्वं बुद्ध्वा मस्तकव्यथाम् अनुभवति ।

ज्ञान. – राजन् ! कुतः कालिदासस्य श्रीगुरुः श्रीभोलानाथः स्वनामजपं करोति ?

कालिदासः – मम गुरुदेवः श्रीकालिचन्द्रः कालिसिद्धि प्राप्तवान् । अधुना स शङ्कर-भोलानाथात् सिद्धिम् अभीप्सति । तदर्थं

स्वशिष्येषु भोलानाथ इति ख्यातः सः। यूयं सर्वे मम गुरुदेवस्य वृथापमानं कुरुथ।

अनिन्द्य.—पश्यत, पश्यत, कथं कालिदासगुरुः राजानं राक्षसवत् पश्यति।

कालिदासः—गुरुदेवः महाराजस्य शरीरे अलङ्कारान् दृष्ट्वा चिन्तयति—यदि दानं हस्तस्य, सत्यं कण्ठस्य शास्त्रं च कर्णस्य भूषणं भवेत् तर्हि बाह्यालङ्कारैः किं प्रयोजनम् ?

हस्तस्य भूषणं दानं सत्यं कण्ठस्य भूषणम्।
श्रोत्रस्य भूषणं शास्त्रं भूषणैः किं प्रयोजनम्॥

भोजः—अनुगृहीताः स्मः भवदुपदेशेन। अस्तु, गुरुदेव ! रामशत्रुः रावणः इति वदन्ति केचन अपरे च रावनः इति। किमत्र शुद्धम् इति मे जिज्ञासा।

भोला—राभणः, राभणः। (सर्वे उच्चैः हसन्ति।)

रस.—नैषः कालिदासस्य गुरुः, अपि तु तस्य गौः।

कालिदासः—महापण्डितेन रसचन्द्रेण सत्यमेव उक्तम्। गौः इति शब्दस्य अर्थः प्रकाशः अपि। स मदर्थे प्रकाश-स्तम्भः। किञ्च राभणः एव शुद्धः, न तु रावणः। यतो हि कुम्भकर्णे विभीषणे च भकारः अस्ति, तस्मात् तयोः ज्येष्ठभ्रातुः नामनि अपि भकारः स्यात्।

कुम्भकर्णे भकारोऽस्ति भकारोऽस्ति विभीषणे।
तयोर्ज्येष्ठोऽसुरश्रेष्ठो राभणो न तु रावणः॥

भोजः — कालिदास ! महान् तव गुरुर्भोलानाथः । ज्ञानरञ्जन ! अस्मै लक्षं स्वर्णमुद्राः प्रदीयन्ताम् ।

सर्वे — लक्षं स्वर्णमुद्राः !

ज्ञान. — यथाज्ञापयति देवः । (अनिच्छया आनेतुं गच्छति)

भोजः — उपकृताः स्मः भवतः पुण्यदर्शनेन । अद्य रात्रौ राजप्रासादे निवसतु भवान् ।

कालिदासः — नहि । गुरुदेवः वटवृक्षमेव वरयते ।

भोला — आम् आम् । (ज्ञानरञ्जनः पारितोषिकं ददाति)

भोजः — यद् रोचते महर्षिवराय । (भोजः, कालिदासः भोलानाथश्च प्रस्थिताः ।)

अमरः — कालिदासं पाशबद्धं कर्तुम् इच्छन्तः वयं स्वयमेव महापङ्के निमग्नाः ।

ज्ञान. — यत् किमपि भवेत्, अहं तं कालिदासं न मोक्ष्यामि ।

रस. — अपि यूयं जानीथ यत् लोलुपः कालिदासः ब्राह्मणः सन्नपि मत्स्यं खादति इति ?

विद्या. — अपि एतत् सत्यं रसचन्द्र ?

अनिन्द्य. — आम् आम्, राजानं वदिष्यामः यत् कालिदासः मत्स्यं खादति ।

ज्ञान. — बुद्धिर्यस्य बलं तस्य । यस्य बुद्धिः अस्ति स सत्यम् असत्यं कर्तुं शक्नोति ।

रस. — असत्यं च सत्यम् ।

ज्ञान.—एतद् अहम् अचिरमेव प्रमाणयिष्यामि । शुभस्य शीघ्रम् । एषः अधुनैव साधयामि । यदि महाराजः आगच्छेत्, सूचयत यत् कालिदासः मत्स्यं खादति इति । अन्यत् सर्वं मयि त्यजत ।

रस.—कृतं ते ज्ञानरञ्जन ! (निष्क्रान्तः ज्ञानरञ्जनः)

अमरः—प्रतिहार ! राजानम् आह्वय कृपया । अत्यावश्यकम् आपतितम् । (प्रतिहारः निष्क्रान्तः)

अनिन्द्य.—मम भयं भवति । अहं राजानं न वदिष्यामि ।

रस.—त्वं भीरुः, कापुरुषः । अहं वदिष्यामि सर्वम् ।

विद्या.—आम्, त्वमेव वद । दिनानुदिनं कालिदासस्य गौरवं वर्धतेतराम् ।

अनिन्द्य.—तेन सह तस्य अहङ्कारोऽपि ।

अमरः—राजा चिन्तयति यत् स एव एकः पण्डितः वयं च तस्य दासानुदासाः !

रस.—परोह्यः उद्याने कालिदासं महाराजेन सह भ्रमन्तम् अपश्यम् । न जाने तेन अस्माकं विरुद्धं किं कथितम् इति ।

विद्या.—न केवलं भ्रमणम्, तेन सह प्रतिदिनं भोजनम् अपि करोति ।

अमरः—तूष्णीम् ! राजा आगच्छति ।

भोजः—(प्रविश्य) किम् अधुनापि गृहं न गता यूयम् ?

रस.—किं कुर्याम राजन् ! हृदयं दुःखेन दीर्यते ।

अमरः – ब्राह्मणजातेरपमानं सोढुं न शक्नुमः ।

अनिन्द्य. – कविवरः कालिदासः ब्राह्मणः सन्नपि ...

भोजः – किमर्थं तूष्णीकः ?

रस. – ब्राह्मणः सन्नपि आमिषं खादति, मत्स्यभोजनं करोति ।

भोजः – असम्भवम्, असम्भवम् । कालिदासः मत्स्यं खादति इति मम विश्वासो न भवति ।

ज्ञान. – (मलयेन सह प्रविश्य) विश्वासो भविष्यति राजन् ! असम्भवं सम्भविष्यति अधुना ।

भोजः – कथमेतत् ?

ज्ञान. – एष मम निकटे तिष्ठति कालिदासस्य सेवकः मलयः । पृच्छतु तं कृपया स कुतः आयाति तस्य प्रसेवे च किम् अस्ति इति ।

भोजः – त्वं कुत आयासि ?

ज्ञान. – वद, वद ।

मलयः – मत्स्यापणात् महाराज !

भोजः – प्रसेवे किम् अस्ति ?

ज्ञान. – किम् अस्ति ? भयं किमर्थम् ?

मलयः – मत्स्याः महाराज !

भोजः – कस्य अर्थे सन्त्येते ?

मलयः – स्वामिनः कालिदासस्य अर्थे ।

भोजः – सत्यं वदसि ?

मलयः—आ आ आ ...

ज्ञान.—अवश्यं महाराज ! एष कालिदासस्य प्रसेवः । सम्यक् अभिजानामि एनम् ।

भोजः—तथापि न मे विश्वासः ।

सर्वे—आम् आम्, अयं कालिदासस्य एव ।

अनिन्द्य.—भवान् कालिदासे अत्यधिकं स्निह्यति, तस्मात् तस्य दुर्गुणान् स्वीकर्तुं न इच्छति ।

भोजः—अहं जाने, तं प्रति युष्माकम् ईर्षा वर्तते । मम विश्वासः तदैव भविष्यति यदाहं कालिदासस्य हस्ते मत्स्यं द्रक्ष्यामि । यदि यूयं प्रमाणयितुम् असमर्थाः, विद्रावयिष्यामि युष्मान् नगरात् । साधयामि तावत् । (निष्क्रान्तः) ।

अमरः—अचिरमेव प्रमाणयिष्यामो राजन् ! ब्राह्मणकुलस्य निन्दां न सहिष्यामहे ।

विद्या.—राजा कथमपि न विश्वसिति ।

ज्ञान.—धैर्यम्, धैर्यं मलय ! भयं मा कुरु । कालिदासः न ज्ञास्यति । धनं गृहाण ।

रस.—अरे अधिकमपि प्राप्स्यसि । यथा वदामि तथा कुरु । यदि श्वस्तनदिनात् पूर्वं तं न धरामः तर्हि स राजानं सर्वं कथयिष्यति वयं च यमालयं गमिष्यामः । शृणु ।

श्वः यदा कालिदासः नद्यां स्नाति तदा निभृतं तस्य पोटल्यां जीवन्तं मत्स्यमेकं स्थापय ।

ज्ञान.—जीवन्तं मत्स्यम् । बोधसि ?

रस.—कार्ये सुसम्पन्ने दक्षिणहस्तम् उत्थापय । स्मर, दक्षिण-हस्तम् ।

अमरः—यदि एतत् सम्यक् करोषि, अहमपि तुभ्यं धनं दास्यामि ।

अनिन्द्य.—कालिदासं किमपि न कथय । निश्चिन्तः तिष्ठ । शतं स्वर्णमुद्राः प्राप्स्यसि ।

ज्ञान.—चलत । अरे कालिदास ! श्वः त्वमेव धारानगर्याः प्रान्तभागं प्राप्स्यसि न तु वयम् । (सर्वे निष्क्रान्ताः)

## सप्तमं दृश्यम्

कालिदासः—(नद्यां सूर्यनमस्कारपरायणः)

ॐ जवाकुसुमसङ्काशं काश्यपेयं महाद्युतिम् ।
ध्वान्तारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥

ॐ मित्राय नमः । ॐ रवये नमः । ॐ सूर्याय नमः । ॐ भानवे नमः । ॐ खगाय नमः । ॐ पूष्णे नमः । ॐ हिरण्यगर्भाय नमः । ॐ मरीचिमालिने नमः । ॐ आदित्याय नमः । ॐ सवित्रे नमः । ॐ अर्काय नमः । ॐ भास्कराय नमः ।

मल्यः—मम स्वामी तु स्नानं कुर्वन् सूर्यनमस्कारे मग्नः । अहं

यत् करोमि तत् स नैव द्रक्ष्यति । अहं तावत् प्रचुरं धनं प्राप्स्यामि । क्षम्यतां प्रभो ! मृत्युभयात् अहम् कार्यमेतत् करोमि । (कार्यं समाप्य दक्षिणहस्तम् उत्थापयति ।)

ज्ञान.—अनिन्द्यकर्मन् ! गच्छ धावन् नृपसकाशम् । कथमपि तं बोधयित्वा अचिरमेव प्रमोदवनम् आनय । तेन मार्गेण गच्छन्तं कालिदासं तत्रैव धरिष्यामः । (निष्क्रान्तौ)

मलयः—कार्यं समाप्तम् । आशासे ज्ञानरञ्जनः अपश्यत् माम् । अन्यथा सर्वं नष्टं भवेत् । हे भगवन् ! रक्ष माम् । कथम् अद्य स्वस्वामिनं छलयामि ! धिक् माम् ! धिक् युष्मान् रे पण्डिताः !

कालिदासः—अरे किं वदसि आत्मगतम् ? अपि वातुलः सञ्जातः ?

मलयः—(विचलितः) नहि नहि, किमपि नहि । अहं किमपि न वदामि । अहं तु भवन्तं वदामि शीघ्रं स्नानं समाप्नोतु इति ।

कालिदासः—मिथ्या मा वद । मया तव अन्तिमशब्दः श्रुतः 'पण्डिताः' इति । किं गोपयसि मत्सकाशात् ?

मलयः—वृथा चिन्तां न करोतु स्वामिन् ! गृहं गच्छाव ।

कालिदासः—अस्तु, किन्तु तव विचित्राचरणेन शङ्कितोऽहम् । अरे आश्चर्यम् ! अहं तु स्वपोटलीम् एवं कदापि न

बध्नामि । किमेतत् मलय ? त्वया एषा उद्घाटिता किम् ?

मलयः—नहि स्वामिन् ! एषा तु तथैव अस्ति । मया किमपि न कृतम् ।

कालिदासः—मलय ! किं जातं तव अद्य ? अपि अस्वस्थः त्वम् ? (पोटलीम् उद्घाट्य) हे भगवन् ! किमेतत् ? अस्यां स्वच्छपोटल्यां कः एकं मत्स्यम् अस्थापयत् ?

मलयः—(पादयोः पतन्) क्षम्यतां प्रभो ! नैष मम दोषः, नैष मम दोषः । अहं निरपराधः । इयं रसचन्द्रस्य दुर्बुद्धिः । ते भवन्तं नगरात् बहिष्कर्तुम् इच्छन्ति । स माम् अवदत्—'त्वं कालिदासस्य पोटल्यां मत्स्यमेकं स्थापय । प्रचुरं पुरस्कारं प्राप्स्यसि । अन्यथा त्वां हनिष्यामः ।' प्राणभयेन मया एतत् कृतम् । क्षम्यतां प्रभो, क्षम्यताम् ।

कालिदासः—त्वया यत् कृतं तत् नैव उचितम् अतीव निन्द्यं च । किन्तु अधुना मा भैषीः ।

मलयः—अधुना ज्ञानरञ्जनादयः राजानं सूचयितुं गताः यत् भवान् मत्स्येन सह गृहं गच्छति इति ।

कालिदासः—सर्वं साधु भविष्यति । आगच्छ, गृहं गच्छाव । (निष्क्रान्तौ । ततः प्रविशन्ति रसचन्द्रः, ज्ञानरञ्जनः, अमरसिंहः विद्याधरः च ।)

रस.—अरे ज्ञानरञ्जन ! अपि निश्चितं जानासि यत् मलयस्य दक्षिणहस्तः त्वया दृष्टः ?

ज्ञान.—अरे रसचन्द्र ! इदं ज्ञानस्य चक्षुः। गरुडम् अपि लोभयेत्। इदं कदापि प्रमादं न करोति।

अमरः—अस्तु, कथं जानासि यत् मलयः न छलयेत् इति ?

रस.—आम् वद, कथं जानासि ?

ज्ञान.—जानामि एतान् धनलोभिमूर्खान्। धनलोभेन ते स्वमातरमपि विक्रेतुं शक्नुवन्ति। कार्यं सफलम् इति निश्चितं जानीहि।

रस.—कालिदासस्तु यथानित्यं प्रमोदवनमार्गेण एव गृहं गमिष्यति।

ज्ञान.—तस्मादेव मया अनिन्द्यकर्मा राज्ञः सकाशं प्रेषितः।

रस.—अस्तु, शीघ्रम् एत। महाराजात् कालिदासात् च पूर्वं प्रमोदवनं प्राप्तव्यम्। वामतः अनेन लघुमार्गेण गत्वा तत्र अग्रे प्राप्स्यामः। एत।

विद्याधरः—आम्, चलत।

अमरः—कालिदास ! अधुना तव नाटकं समाप्तप्रायम्। (निष्क्रान्ताः)

## अन्तिमं दृश्यम्

(प्रमोदवनमार्गः)

रस.—(ज्ञानरञ्जनं प्रति) अरे ज्ञान ! अनिन्द्यकर्मा किं करोति ? महाराजः आगमिष्यति न वा ?

अभरः—अत्रान्तरे यदि कालिदासः गच्छेत्, तदा तु सर्वमपि वृथा ।

रस.—अपि त्वया सम्यक् बोधितः सः ?

ज्ञान.—न भेतव्यम् । राजा अवश्यम् आगमिष्यति । अनिन्द्यकर्मा सभायां तथा शान्तं नीरवं च तिष्ठति यथा राजा तस्मिन् विश्वस्य अवश्यम् आगमिष्यति ।

विद्याधरः—आम्, अदूरे महाराजः दृश्यते ।

सर्वे—विजयतां महाराजः ।

भोजः—असमये आह्वानस्य कारणं ज्ञातुम् उत्सुकोऽहम् ।

रस., ज्ञान.—महाराज !

ज्ञान.—(रसचन्द्रं प्रति) अस्तु, त्वं वद ।

रस.—त्वया दृष्टम्, त्वमेव वद ।

ज्ञान.—महाराज ! नैष उपालम्भः, अपि तु सत्यं प्रमाणम् । अद्य प्रभाते भ्रमणाय गच्छन् अतीव विचित्रं दृश्यम् अपश्यम् । कविशिरोमणिः कालिदासः स्नानव्याजेन धीवरधर्मम् अनुसरति स्म । मत्स्यमेकं धृत्वा ससम्भ्रमम् इतस्ततः अवलोक्य स स्वपोटल्याम् अस्थापयत् ।

रस.—यदि नात्र भवतः विश्वासः तर्हि गृहाभिमुखम् आगच्छन्तं कालिदासं धरामः अत्र । सः अनेन मार्गेण आगच्छति ।

भोजः—किन्तु शृणुत सावधानम् । यदि कालिदासस्य पोटल्यां मत्स्यः न स्यात्, राज्यात् निर्वासनं सुनिश्चितं युष्माकम् ।

अनिन्द्य.—निरपराधोऽहं राजन् !

विद्याधरः—अहमपि राजन् !

ज्ञान.—सत्यं कापुरुषौ युवाम् । मम नेत्रम् असत्यं नैव पश्येत् ।

रस.—किन्तु राजन् ! कालिदासस्य पोटल्यां मत्स्ये सति स निर्वासितः भवेत् ।

विद्याधरः—एष आयाति कालिदासः ।

भोजः—सज्जा भवाम तर्हि । (ससैन्यः सपण्डितश्च) स्वागतं ते ब्राह्मणकुलभूषण कालिदास ! त्वामेव प्रतीक्षामहे ।

कालिदासः—विजयतां महाराजः । शं भवद्भ्यः ।

भोजः—अपि ब्राह्मणवरस्य सर्वमपि कुशलम् ?

कालिदासः—सर्वमपि सर्वात्मना कुशलं राजन् ! किन्तु कुतोऽद्य मार्गमध्ये सभा ?

भोजः—कालिदासस्य पुण्यदर्शनाय मनोऽस्माकं व्याकुलं भवति । तदिदानीं धन्याः स्मः । वयं भवतः विशेषप्रसन्नतायाः कारणं ज्ञातुं शक्नुमः किम् ?

कालिदासः—न कोऽपि विशेषः राजन् ! नद्यां सुखावगाहनेन प्रफुल्लिता मे समग्रा सत्ता ।

ज्ञान.—स्नानसमये नदीतीरे कोऽपि आसीत् किम् ?

कालिदासः—अहं त्वाम् उत्तरयितुं नागतः ।

भोजः—इच्छामि तस्योत्तरम् ।

कालिदासः—मम भृत्यं विना अन्यः कोऽपि न आसीत् ।

ज्ञान.—राजन् ! यथा कथितं मया ...

रस.—मया श्रुतम् अद्यत्वे नद्यां बहवः मत्स्याः भवन्ति इति ।

कालिदासः—सत्यं किल ते श्रवणम् ।

भोजः—स्नानसमये नद्यां किं कृतं भवता ?

कालिदासः—सूर्यनमस्कारः राजन् !

ज्ञान.—अस्तु राजन् । वदतु कृपया—स्नानसमये पोटल्या किं प्रयोजनम् ?

कालिदासः—अवश्यम् अस्ति प्रयोजनम् । युष्माकं सर्वेषामपि यावती सद्बुद्धिः ततोऽप्यधिका अत्र वर्तते ।

भोजः—तथा महार्घं किमस्ति तत्र यथा इयत् सावधानं धरसि ?

कालिदासः—राजन्, राजन्, एतत् ...

भोजः—निःसङ्कोचं वद ।

अमरः—वयं द्रष्टुम् इच्छामः । किमस्ति पोटल्याम् ?

कालिदासः—महाराज ! एतत्, एतत् मम पुस्तकम् ।

रस.—अहो ! अवश्यं विशिष्टं पुस्तकं राजन् ! अन्यथा इतः थप् थप् इति जलं पतेत् कथम् ? (अत्रान्तरे मन्दं मन्दं प्रस्थितः मलयः ।)

कालिदासः—एतत् मम काव्यपुस्तकं रसचन्द्र ! त्वं तु रसज्ञः । सामान्यम् एतत् बोद्धुं न शक्नोषि यत् काव्ये रसः भवति स च जलवत् प्रतीयते ?

ज्ञान.—आम् आम्, एतदपि बोधामः यत् काव्यपुस्तकात् दुर्गन्धोऽपि निर्गच्छति ।

कालिदासः—दुर्गन्धः इतो न निर्गच्छति ज्ञानरञ्जन, अपि तु तव मस्तकात् ।

भोजः—प्रश्नस्य समुचितम् उत्तरं ददातु । कुतो दुर्गन्धो निर्गच्छति ?

कालिदासः—महाराज ! अत्रास्ति रामरावणयोः कथा । तयोर्युद्धे बहवः मृताः बहूनि वर्षाणि च गतानि । तस्मात् इतो दुर्गन्धो निर्गच्छति । यदि भवान् कथयेत्, एष आयामि एतत् बहिः क्षिप्त्वा ।

ज्ञान.—तावत् अमूल्यं काव्यं क्षेप्स्यसि किमर्थम् ?

अमरः—महाराज ! पुस्तकं जीवत् प्रतीयते ।

कालिदासः—अत्र मन्त्रशक्तिः अस्ति ।

रस.—साधूक्तं त्वया । पुस्तकस्य पुच्छमपि भवतीति मया न ज्ञातम् ।

ज्ञान.—आम्, जीवने ममापि प्रथमदर्शनं पुस्तकपुच्छस्य !

कालिदासः—तालपत्रैः निर्मितम् इदम् । तस्मात् पुच्छमिव दृश्यते राजन् !

भोजः—अरे गुणवन्, मत्स्यरङ्क पण्डित ! मत्स्यं धृत्वा छलयसि माम् ?

कालिदासः—नहि, नहि राजन् ! ममेदं पुस्तकम् एव।

भोजः—ज्ञानरञ्जन ! पश्य कीदृशं पुस्तकं तत् ? उद्घाटय पोटलीम्। (पोटली उद्घाटिता) शृणुत रे पण्डित-पाशाः ! युष्माकम् अर्थे नेयं नगरी। धारानगर्याम् इदम् अन्तिमं दिनं युष्माकम्। श्वो यदि ...

कालिदासः—नैवं वदतु राजन् ! चन्दनवृक्षः महान्। तस्मिन् दुष्टाः सर्पाः वसन्ति, सरलाः पक्षिणोऽपि। स सर्वेभ्यः आश्रयं ददाति, न जातु विद्रावयति दुष्टान् सर्पान्। राजापि चन्दनवृक्ष इव ! आश्रयदानं तस्य सनातनः धर्मः।

भोजः—भवान् न केवलं बुद्धिमान् महाकविश्च, अपि तु दयालुः, हिताकाङ्क्षी। भो पण्डिताः ! दश दिनानि युष्माकं मुखं द्रष्टुं न इच्छामि। अपेत। (ते निष्क्रान्ताः) एते भवते ईर्ष्यन्ति। भवान् कविश्रेष्ठः। स्वगृहे अहर्निशं काव्यानि रचयतु। प्रयोजने सति अहं तत्र गमिष्यामि। सभागमनस्य क्लेशं नानुभवतु भवान्। परमप्रीतोऽहं भवति। भवान् मम भ्राता। (आलिङ्गति)

---